# Mitra! Shabda-Shivire

## Sambhuya Mahakavyam

**[ Lyrical Product of New Directions and Dimensions ]**

by

**Mahakavi Maya Prasad Tripathi**

**Varanaseya Sanskrit Sansthan**
VARANASI

# मित्र ! शब्द-शिखरे

[ अभिनवायामदिशाशिल्पसंभूतं संभूयमहाकाव्यम् ]

महाकवि मायाप्रसादत्रिपाठी

प्रकाशक :

वाराणसेय संस्कृत संस्थान

जगतगंज, वाराणसी

# मित्र ! शब्द-शिविरे

[ अभिनवायामदिशान्वेषणम्
रागरागिणीसंयुतम्
संभूयमहाकाव्यम् ]

प्रणेता



## महाकवि मायाप्रसादत्रिपाठी

# महाकविमायाप्रसादत्रिपाठिविरचिता
# विशिष्टाः संस्कृतकाव्यग्रन्थाः

१—कणति किंजल्कः, ध्वनति वज्रः,

२—असरतृषा

३—मित्र कब्दशिविरे

४—अन्या सरणिः

५—तस्मादृते

६—शतसेतकृते

७—पथति च शाश्वतगीतम्

८—अवतिष्ठस्व क्षणं कान्तार अरे !

९—श्वः प्रभृति

१०—सर्वेषाम्

मायाप्रसादत्रिपाठी द्वारा प्रणीत अन्य प्रमुख ग्रंथ

११—औचित्यजीवनम् ( मौलिक दर्शनकी सर्वश्रेष्ठ कृति के रूप मे सरकारद्वारा पुरस्कृत )

१२—अतीतका अभिनवालोक ( प्राचीन भारतीय विज्ञान-संस्कृति )

१३—कथाशेष ( प्राचीन भारतीय विज्ञान-संस्कृति )

१४—आविष्कारोंका आवाहन ( सैकड़ों-सहस्रों बाद विज्ञान )

१५—विज्ञानके नए सत्य, नए वादे ( वर्तमान विज्ञान, उसके अगले डग )

१६—साढ़े सात फुट की तीन औरतें ( भविष्यनिर्मात्री विज्ञानकथाएँ )

१७—आकाशकी जोड़ी ( अनूठी मनोहर विज्ञानकथाएँ )

१८—षोडसी ( सनसनीखेज, रोचक, उदात्त सामाजिक कहानियाँ )

१९—प्यार और पनाह ( जीवन की अद्भुतपर्तों में अंकुरितपल्लवित मुग्धकर कहानियाँ )

२०—तृप्ति ( रहस्यरोमाञ्चके जीवनदर्शन और सत्य से अपूर्व समन्वय करनेवाला उपन्यास )

२१—आत्महत्याका अमृत ( सत्य और रहस्य, धरती और आसमान, सात समुद्रपानी तथा मनकी रेत आदि विरोधाभासोंका अनुपम उपन्यास )

२२— जापान की रूपरेखा

२३—युगपथ से चीन

24—Development of Goographic Knowledge in ancient India ( From Vadic Times to 1200 A. D. )

25—Stabilisation of World Peoce ( Acclaimed by Presindent D. D. Eisenhow, U. S. A. )

२६-२७—लगभग एक दर्जन बाल-साहित्य ( शिशुगीत एवं बाल कथाएँ )

# स्फुरणोन्मीलनम्

# मित्र ! शब्दशिविरे

व्यष्टेः समष्टेश्च दुःखं, कष्टं, संघर्षः आस्था, श्रद्धा, राजनैतिक-सामाजिक नवक्षितिजानि, मूल्यसातत्यं, मूल्यपरिवर्तनं ( वास्तवं वाभासितंत्रा ) च सर्वत्र वरीवर्तन्त एव दरीदृश्यन्त एव । अद्यतने देशे काले च तेषां सर्वेषामभिव्यक्तिः मदीयं प्रमुखं लक्ष्यं, पूर्वत एव स्वीकृतसिद्धान्तः ।

अतस्त्वत्र तेषा सर्वेषामुपस्थापनोपन्यासः, प्रतिष्ठा, उत्किरणञ्च अर्वाचीन कविताया वास्तविकी प्रत्यभिज्ञा । तदभावे संस्कृतकवितायाम् अपूर्णताविलता, प्रवाहमन्थरता—स्थैर्यमेव चन्दिष्यति ।

परम्परागतां, पर्युषितामितिवृत्तात्मकतां प्रत्यपि इदमेवकथनं चरितार्थतामेति ।

संस्कृतकविताया नवच्छविमालेखाय सर्वे सुधीजनाः, काव्यमर्मज्ञा रसिका अत्र मित्रसुहृद्रूपेण, प्रकाशं वितरन्तः सूर्यरूपेण संबोधिता, आहूतास्तथामन्त्रिताश्च । नहि इतस्ततः परिभ्रमन्तो भ्रान्तिलोकं प्रापणार्थं, प्रत्युत शब्दानां-शब्दब्रह्मणः-आह्लादकरे-स्फूर्तिकरे-जीवितस्य गाम्भीर्यावगाहने-शिविरे । आशासे एवंविधाः कविता एतान् सर्वान् भावयित्रीप्रतिभाधनाढ्यान्, इतरान् सामान्यपाठकानपि आधुनिकयुगापेक्षितां तृप्तिं शान्तिं, मानसिकतान्विर्तिमुत्फुल्लहृदयतां च निश्चप्रचं नेष्यन्ति ।

गीर्वाणवाण्या नूतनाभ्रंलिह्सौधनिर्माणे बहुव्यापृति-विपुलव्याप्तिसमावेशाय अयं हि अनायासस्त्वायासः ।

अस्मिन् शिविरे सर्वे समासाद्य विश्राम्यन्तु, जीवितस्य चतुरस्रतायाः स्वागतं कुर्वन्तु, अमृतत्वमश्नुवतामनुभवन्तु च । संस्कृत कवितायाः प्रगतिः सर्वाणि क्षितिजानि परिष्वजतु, सर्वाधरणिं सहजतया अधिकाधिकां स्वपरिवेशे समावेशयतु—सभाजयतु ।

कार्त्स्न्येन कर्णक्रतुमिमं "संभूयमहाकाव्यम्" इति सर्वथा नूतनाभिधानेन संकीर्तयामि । विषयोऽयं मया यथेष्टं विवृतः स्वकीये "क्वणति किञ्जल्कः ध्वनति वज्रः" इत्याख्ये संभूयमहाकाव्ये" नहि परितोऽसंलक्ष्य" इति शीर्षण्यायां भूमिकायाम् । ( वाराणसीस्यचौखम्भाप्रकाशिते )

अत्रान्तर्निविष्टा बह्वयः कविताः "संविद्" (मुम्बईस्थात्रैमासिकी) "गाण्डीवं" ( साप्ताहिकं वाराणसीस्थं ), "सूर्योदयः" ( काशीस्थो मासिकः ) इत्येतेषु पत्रेषु, इतरासु पत्रिकासु चापि पूर्वं प्रकाशिताः ।

अत्र श्रीमतोविरलामहाभागान्, मिरजापुरस्यहिण्डालको जनसेवाट्रस्टस्याध्यक्षान् श्रीयुत के० के० राठी महोदयान् च भूरिशो धन्यवादैः कविरयं समाजयति, येषां गुणग्राहकतया सहानुभूत्या, अर्थसाहाय्येन च ग्रन्थस्यास्य प्रकाशनं समभवत् ।

सर्वान् सभाजयन्,
अनुभूतिक्रतुकार :
**मायाप्रसाद त्रिपाठी**

## मित्र ! शब्दशिविरे

लुप्तो जातो नीलिमगलविषपायी,
मूर्तिमतोपीडामुद्रा खलु सूर्यः,
रोदिति च तितिक्षा नवसाक्षरतिमिरे,
एष तु शीतांशुकरो मृगभ्रमतूर्यः ॥१॥

एष च पवनः केवलविरलविषादः,
कालदिशाहीनो मरकतविषवाहः,
स्वप्नकषायितचञ्चलसागरहृदये
ज्योतिश्चरणे ह्युच्छलहुतभुग्दाहः ॥२॥

सखिरी ! न सखो त्वेषाक्रोशे धरणी,
शोषयति च रक्तं सैकतव्रणवेला,
दीधितिकण्टकफेनकबुद्बुदजाले
अम्ला तिक्ता रुग्णा नग्ना खेला ॥३॥

कोषे कोषे नृत्यति निर्दयरजनी,
षड्रिपुभवने चाद्भुतविग्रहकरणे,
इच्छादेशे छिन्नं समरसचित्रम्,
प्रज्ञासंज्ञा शतचिह्नितशवशरणे ॥४॥

स्वागत ! स्वागत ! साथिन् ! तरुणे मार्गे
एहि तु विश्रम ! मधुशब्दानां शिविरे,
यदि वैरो जातो लघुलघुताहर्षः,
एहि च नीडे रसगीताञ्जलिविकिरे ॥५॥

## त्रिधाविभक्तिः

### नावतिष्ठते आयामत्रितयम्

मधुवनकुञ्जे विपिन-व्यङ्ग्ये,
जगसंश्लेषे विपणेर्वेशे,
इङ्गितवर्षे गत्वरकर्षे
शाद्वलमर्षे वेलातर्के,
मस्तिष्कं संन्यासि ॥१॥

कुसुमसुतर्षे मधुकरहर्षे,
वाञ्छासारे मनसिजतारे,
रससंसारे दृक्संभारे,
वारे वारे स्वर्णविहारे,
हृदयं गीतेवासि ॥२॥

रङ्गकुरङ्गे सिन्धुतरङ्गे,
क्षणिकासङ्गे घनतडिदङ्गे,
शतशो ध्वान्ते मुग्धे प्रान्ते,
गगने भ्रान्ते सूर्ये क्रान्ते,
चित्तं परितः शासि ॥३॥

री शारीरक-निलिम्पनिर्झरि !
दिवसे तु त्रिपथगामदशर्वरि ॥४॥

## शतरोमन्थाः

[ रागविहागः ]

प्रस्तरमुखरितलेसरगाथा ॥१॥

मरकतहरितापीताशबलितवासन्तिकसञ्जाता ॥२॥

पत्रे पत्रे तां खलु स्थापन-करणे किं सुमवरणे ? ॥३॥

लेखनफलकाधारे गायति सा भूत्वा बहु ग्रन्थाः ॥४॥

नागदन्तसंकेते भित्तौ भित्तौ शतरोमन्थाः ॥५॥

शतदलमुकुरे रससंपुटके तस्या हासविलासः ॥६॥

संस्पृशति च तस्या मतिनाडीम् इह दिनकर इतिहासः ॥७॥

संप्रति साम्प्रत एषतु मधुकर ! तस्या गायनकाशः ॥८॥

नभसः पृष्ठे शाद्वलभूमौ सहि प्रलयङ्करपाशः ॥९॥

उन्मादवहित्रे सु-कुसुमसत्रे विलुलितज्योत्स्नानीडे ॥१०॥

कः परिणामः क उपोद्घातः हर्षेचन्द्रापीडे ! ॥११॥

परभृद् रावे तुमुलभ्रान्तौ नन्वापातसनाथा ॥१२॥

एषा पविप्रघणे रे जाता ॥१३॥

प्रस्तरमुकुलितलेसरगाथा ॥१॥

## हस्तयोः द्वे निम्बुकखण्डे

[ रागविहागः ]

कर्तितरसमयनिम्बुकशकले ॥१॥

शतमदजृम्भितचुम्बितशिखरे मणिमयदर्पणचपले ॥२॥

एकम्त्वभिनवभाषाखण्डं, एकंगोरसस्निग्धम् ॥३॥

एकं वितरति कर्मसमर्पण-गन्धवहं दिग्रिक्थम् ॥४॥

एकं संचिनुते वंशपथे मोहन-राजतनिद्राम् ॥५॥

एकं स्वदते त्वम्लं कुरुते अभिलाषामुन्निद्राम् ॥६॥

एकं कुरुते जीवनभाले श्लोकितस्वप्निलमुद्राम् ॥७॥

एकं विपणति दिनकररचनां वर्तुलपेशलक्षुद्राम् ॥८॥

अश्वत्थसुबीजं ननुनिवहति चैकं काञ्चनजाले ॥९॥

एकं मूकनिषेधे वाष्पं विलिखति राजतकाले ॥१०॥

प्रत्येकं बुद्बुद इव हृदये विकचा दृष्टेः क्रीडा ॥११॥

मृद्वीकाशाखायाः शरणे स्रवति तु रसतापीडा ॥१२॥

कोलाहलप्रीतौ प्लवगीतौ एते नाटकविपुले ॥१३॥

कर्तितरसमयनिम्बुकशकले ॥१॥

## पत्रे पत्रे हरितो वह्निः

[ रागविहागः ]

चल मन एष न मधुवनदेशः ॥१॥
शिशिरे प्रालेयकरैरातप उप्तो ज्वालाकेशः ॥२॥
तरुणरसालैस्तरुणमधूकैः विधृतं गैरिकवस्त्रम् ॥३॥
अमृतं, कवितां सरिता त्यक्त्वा तनुते सैकतशस्त्रम् ॥४॥
पत्रे पत्रे हरितो वह्निः वातुलजिह्वाशेषः ॥५॥
मुकुलस्पर्शे सुमवनखिन्नः कुसुमाकररसलेखः ॥६॥
काञ्जनक्षीरी कवयति गायति तर्षं कण्टकवेधम् ॥७॥
ज्वरविकलो हिमशैलः ष्ठीवति इह शबलितमुत्सेधम् ॥८॥
मनसिजनेत्राभिष्यन्दे खलु सर्वा यौवनलीला ॥९॥
उद्वेलितसिन्धौ पाषाणे प्राणोच्छ्वासोन्मीला ॥१०॥
पुस्तकपुटके गगनं धरणी वर्णे वर्णे लुप्ते ॥११॥
उत्कण्ठास्खलिते च्छलनायां प्रणयतडिति घनसुप्ते ॥१२॥
कूजति रजनी हर्षति दिवसो व्यर्थं वितथोन्मेषः ॥१३॥
चल मन एष न मधुवन देशः ॥१॥

## भाषां मृग्यन्

[ रामविहागः ]

स क आम् ! गायति भाषाहीनः ॥१॥

एषक आलपते मृदुकोरक-चेतसि नभ उड्डीनः ॥२॥

अस्फुटशब्दविकिरणे मसृणे मुग्धमुरलिकाभावे ॥३॥

संलपते त्वेष क एकाकी विर्णविहीने रावे ॥४॥

मातृसकाशे पितृसमीपे तत् किं नहि कथनीयम् ?॥५॥

पाणिसमारोहे पदक्रान्तौ ऋजुमधुरं नटनीयम् ॥६॥

केवलकोमलमुखरितदृष्टी वादयते मम वीणाम् ॥७॥

किञ्जल्के प्रतिध्वनिमेखलकां शैशवसंज्ञानीडाम् ॥८॥

रोहित इत्थं नवशिशुरेष तु शशिमयसप्तमगगने ॥९॥

कुरुते शुक्लमनाहतनादम् उपवनसुरभेः जपने ॥१०॥

स किमवगच्छति भित्तेः श्वासः ननु किं छदिराभोगः ॥११॥

स्मितविकचः किं खलु रवितिलकः शिखरारूढोयोगः ॥१२॥

एष क आलपते वाग्रहितः परमागिराप्रवोणः ॥१३॥

उच्चारणसैकतदेशे रे ! अद्‌भुतपुलकितमीनः ॥१४॥

स क आम् ! गायति भाषाहीनः ॥१॥

●

## करतलरेखायां घूर्णितशैलः

[ रागविहागः ]

रोदिति चोत्कुरुते त्वादर्शः ॥१॥

करतलरेखायां घूर्णति खलु भीमः शैलविमर्शः ॥२॥

गोपदसलिले मज्जितलुप्तः स हि ब्रह्माण्डिकमर्षः ॥३॥

सीमाहीने विपदाशिविरे शोचति सर्षपहर्षः ॥४॥

अर्धनिशीथे टिट्टिभदुःखं विदलति नभसो हृदयम् ॥५॥

छायाच्छाया क्षुधिता मथिता मृग्यति पेशलप्रणयम् ॥६॥

आत्मनिलयज्योत्स्ना विधुयामे ननु चुम्बनविस्तारः ॥७॥

स्मृतिरथ उन्मदप्राणसमीरः शतपरिरम्भप्रचारः ॥८॥

सखि ! गीतं नीहारशरीरं पुलकावलिपरिवेशः ॥९॥

बध्नाति च निर्मोकैः भयदैः दुर्ललितव्यतिरेकः ॥१०॥

पक्षाघातवशा आयामाः औषधहाहाकारे ॥११॥

तस्कररजनी साहसिकदिनं रजतस्वर्णव्यापारे ॥१२॥

आशापिशुनां सागरशङ्काम् उपदिशतितिमिरतर्षः ॥१३॥

रोदिति चीत्कुरुते त्वादर्शः ॥१॥

## तरलवह्निमोडम्

[ रागविहागः ]

एष तु कश्चित् प्रश्नो नीडे ॥१॥

पवनाहङ्कारे चेष्टालय-गीतेर्मूर्च्छितमीडे ॥२॥

यौवनमधुरो याच्ञाविधुरो म्लायतिसुषमातीरे ॥३॥

अरुणस्तस्मिन् तरलोवह्निः कोटिसुरङ्ग उषोरे ॥४॥

वेल्लति विधमति विनदति प्रवहति मलयजस्वप्नसमीरे ॥५॥

लोहितविद्रधि-राजतस्फोटः दुःखदसुखप्राचीरे ॥६॥

मिषति स पश्यति बहुशो विमृशति भाषारूपकभवनम् ॥७॥

कुरुते तनुते श्रृणुते वृणुते उपवनजाङ्गलरणनम् ॥८॥

तस्मिन् किं कथयति किं प्रथयति सैकतसंहृतस्वर्णम् ॥९॥

रहसि च मिश्रणसङ्कुलदीप्तौ लौहकस्फोरकवर्णम् ॥१०॥

सर्षपसुषिरे द्विज उड्डीनः लुप्तं वर्णविमानम् ॥११॥

नरके ग्रन्थे मोक्षनिबन्धे एतद् ग्रन्थि-प्रमाणम् ॥१२॥

विटपे विटपे सुरप्रहेलिकाः जानासि कथय पोडे ? ॥१३॥

एष तु कश्चित्प्रश्नो नीडे ॥१॥

## अथबन्धुः

[ रागविहागः ]

बालस्तरुणः पूर्णविरामः ॥१॥
वृद्धः किं वा स्वागतवर्त्मनि पृच्छति ग्रन्थायामः ॥२॥
अर्थप्रघणे शब्दप्रणये पर्यवसानप्रणामः ॥३॥
विटपे विटपे मरकतविकत्रो वाणीशाखाबन्धः ॥४॥
अन्तकतृप्तेर्वनवंशी जीवितलतिकास्कन्धः ॥५॥
किरणे किरणे ध्वान्तकरे ननु 'इतिशं' स्मारकशंसी ॥६॥
इङ्गितवर्षे शङ्का-हृदये बहुशस्तडिदतंसी ॥७॥
जीवनटीकारत्नसनाथः त्वाशीर्वाग्व्यापारी ॥८॥
इतिश्री विक्रोणातिद्वारे दृश्या तस्यावारी ॥९॥
क्रोणाति श्रीगणेशं विपिने स सु दण्डवदनुबन्धः ॥१०॥
कण्टकपाटलशाश्वततर्के परिमलसुषमासन्धः ॥११॥
अभिमन्त्रितसन्ततसन्दर्भे एष तु नित्यः सार्थी ॥१२॥
पद्माचारे सुखविस्तारे तस्य नरो विद्यार्थी ॥१३॥
सक्रियप्रत्ययसंकुलचारे पुष्पाणामारामः ॥१४॥
बालस्तरुणः पूर्णविरामः ॥१॥



## तप्ता रोटी कथमाकाशे रे ?

परिक्रामति घूर्णति मौनबुभुक्षा
इह प्राणाक्षे कोलाहलकक्षा,
गृह्णाति च नीलोधीवरसुवनः
पिण्डं पिण्डं, किं कुरुते रक्षा ?

रक्ता रोटी विपुलप्रकाशे !
तप्ता रोटी कथमाकाशे रे ? ॥१॥

क्षुधितः कान्तारः, क्षुधिताः सरिताः,
क्षुधिता घट्टाः, क्षुधिता जलधाराः
क्षुधितः शैलः क्षुधितं नगशिखरम्
अणवः क्षुधिताः सकला विस्ताराः ।

विकिरति वह्निं भस्त्रा हासे रे !
तप्ता रोटी कथमाकाशे रे ॥२॥

अयि ! क्षुधिताः कणिकाः क्षुधितः कालः,
क्षुधिता सीमा क्षुधितः परिवेशः,
उटजं क्षुधितं क्षुधितः प्रासादः,
क्षुधितो द्वीपः, देशोद्देशः ।

नवप्रातस्त्वाभिनव इतिहासे रे ।
तप्ता रोटी कथमाकाशे रे ॥३॥

क्षुत्क्षामाः स्वप्नाः क्षुद्रथसत्यम्,
एतत्परमबुभुक्षितविज्ञानम्,
क्षुद्व्यथितार्थः, क्षुत्प्रथितः शब्दः,
क्षुद्भ्रान्तस्तर्कः, क्षुण्णं ज्ञानम् ।

सीमारहितक्षुधाट्टहासे रे !
तप्ता रोटी कथमाकाशे रे ॥४॥

क्षुद्दर्शननिर्वचने तत्वज्ञे
एकलपुटके परमेश्वरग्रन्थः,
अतितुमुले ग्रन्थालयरोमन्थे
परमः खल्वद्भुतजीवितमन्त्रः ।

सृष्टेः लालनपालनप्राशे रे ।
तप्ता रोटी कथमाकाशे रे ॥५॥

कौशेये मिंष्टे खण्डे खण्डे
आयुष्यपथे समतृप्तिवितरणम्,
षड्ऋतुवक्त्रे च बुभुक्षाचक्रे
संपश्यत्वत्र त्रिकालाहरणम् ॥

किं शं शं ज्वलितायसलासे रे ।
तप्ता रोटी कथमाकाशे रे ॥६॥

## स्पर्शे स्पर्शे

मधुमधुर ! मदिर ! ललित ! ललित ! रे !
मधुकर ! गाय मधुकरीहृदये रे !

कवितादूती सौरभदृग्रावे
वहति तु रक्तं पीतं सन्देशम्,
पवनो नयति विकलव्यथापरागम्
स्पर्शे स्पर्शे सुमपुलकनिवेशम् ।

हृष्यति व्रणितं रणिते समये रे !
मधुकर ! गाय मधुकरी हृदये रे ! ॥१॥

कण्टककीर्णा सितहिमकरभाषा,
अङ्गे चाङ्गे रसदग्धो रागः,
उत्पतति च शून्या शून्याच्छाया
व्यर्थं क्रीणाति च मुरलीं प्रातः ।

आर्द्राप्रतिध्वनिवञ्चितप्रणये रे ।
मधुकर ! गाय ! मधुकरीहृदये रे ॥२॥

आहूताः स्वप्ना व्रीडाद्वारे
मुकुले मुकुले ज्वलितो दीपः ।
शुक्तौ शुक्तौ सन्तरति च सिन्धुः
लघुशफरीकोषे जृम्भति द्वीपः ।

चल चल मधुकर ! शतदलनिलये रे ।
मधुकर ! गाय मधुकरीहृदये रे ! ॥३॥

## पाटल-ज्वाले

मधुमयमादकपाटलज्वाले ! ॥१॥

दिनमणिकौमुदि ! मलयजमादिनि ! सौरभरुनझुनभाले ॥२॥

सखि ! जलधरचिन्त्रित निजस्मितसुधया नहि वितरपिपासाम्॥ ३॥

उपवनदाहकहिमकरत्रासकचन्दनक्रन्दनभाषाम् ॥४॥

प्रस्तरद्रावकस्वप्निलशीर्षकयौवनमुकुलितपटले ! ॥५॥

गीतविचुम्बितगुञ्जनरेखितस्मृतिरसविकिरणचपले ॥६॥

मधुकरशंसितकिशलयरञ्जितमरकतविजिगीषे ॥७॥

को वद याचत इह निशि त्वामरुणजलविवर्तमनीषे ! ॥८॥

प्रथयसि किं परिवेदनसङ्कुलकण्टकक्रीडितपाले ! ॥९॥

मधुमयमादकपाटलज्वाले ॥१॥

## दोषाया अनुपाने

कण्टकप्रश्ने काञ्चनसूची
सवितुर्ज्वलने हृदि का पीडा ?
चन्द्रप्रयासे राजतविजये
किं किं तनुते राकाक्रीड़ा ? ।।१।।

इह को जायुः वारिदविपणे ?
उपचारः को गगनाह्वाने ?
चपलापृथुपविप्रतिहृतरोगे
मधु किं दोषाया अनुपाने ? ।।२।।

शब्दानामधरे बहु स्फुरिते
अर्थो वेल्लति किं रक्तवने,
लुञ्जं खञ्जं मौनं कुरुते
कां कां याच्ञां श्रावणशरणे ? ।।३।।

कोलाहलधूमो रसवसती
किं कुरुते जनश्वासविरोधम् ?
वक्त्रे वक्त्रे फुप्फुसवाते
पुनरपि मरकतजाङ्गलशोधम् ।।४।।

अलिरावे गुञ्जति किं ब्रह्म ?
वशवदे गायति किं ब्रह्म ?
समीरणो मृग्यति किं सत्यम् ?
सुरभिशतं किं शीर्षकसद्म ? ।।५।।

अति मुखरं निगदति कणनिकरः,
अनुवदति तथा क्षणसङ्कुलता
कर्तव्यं ब्रह्म सदा साक्षात्
ब्रह्मानन्दः कर्तव्यप्रथा ।।६।।

●

## शङ्कते शङ्का

आलोकच्छन्दोबद्धे नीडशते
एष क उच्छलविलुलितकवितासर्गः ?
अश्वत्थप्रयासे पत्राङ्कितलासे
हृदये हृदये को दृग्याच्ञावर्गः ॥१॥

गणितकिरीटी संख्यासुममधुमासः
सर्वेषां खगकल्पविकल्पकप्रातः
गतिरुधिरे पेशलचेष्टातनुविपणे
धूमावृत्त्या चक्रया पथि ह्यनुयातः ? ॥२॥

हर्षविलोडितगायनप्राङ्गणमध्ये
शतदलरविशपथप्रचारितगन्धप्लवे
कालाप्लुतमौकलिकुलसंसदि केयम्
रटति च रटति च सङ्गणकं तुमुलरवे ? ॥३॥

सीमाविरहितसर्वनामसंज्ञायाम्
स्मारं स्मारं कां बहु वाष्पविषादः ?
अज्ञाते नेपथ्ये रुचिरे मञ्चे
परिहसति च नगमुखरित-वादविवादः ॥४॥

उन्मीलितसंपत्तिः जीवितमेतत्
कस्या श्रेयस्-प्रेयस्-जनप्रतिपत्तिः ?
रविविधुसिद्धे कोषे-कोषे कस्याः
संप्रेषणसंवेदनयोरापत्तिः ॥५॥

इह खलु सर्वेषामायामप्रणाशः
भास्वरचञ्चलजटिलो मृत्योः पाशः,
हिमगिरिसागरमृगजलयाने
शङ्काया राज्यमिदं शिवकैलाशः ? ॥६॥

•

## आत्मान्वेषणार्थम्

स्वातन्त्र्यं विजितं विजितं विजितम् ।
रविनयनं पिहितं पिहितं पिहितम् ॥

विन्दोर्विन्दोर्जाते विटपे विटपे
ऋतुचक्रे शाखायां शाखायाम्
घस्मरतामत्ते पत्रे पत्रे
पदलिप्सा: आशायामाशायाम्,
अन्धत्वं हरितं हरितं हरितम् ।
स्वातन्त्र्यं विजितं विजितम् विजितम्
रविनयनं पिहितं पिहितं पिहितम् ॥१॥

आसनविपिने सिंहासनप्रघणे
श्रावणरुजि लतिकायां लतिकायाम्
अगणितकीर्तिपिपासा घर्मार्ति:
अलिरावैर्भ्रमितायां भ्रमितायाम् ।
क्षमाव्रणं रसितं रसितं रसितम्
स्वातन्त्र्यं विजितं विजितं विजितम् ।
रविनयनं पिहितं पिहितं पिहितम् ॥२॥

नीयत एषाद्यार्थिकलोलुपता
रथशतके नौकायां नौकायाम्,
राजपथे सरणौ कृत्स्नाप्लावे
चीत्कार: सर्वंहुताशालायाम् ।
नवराष्ट्रं व्यथितं व्यथितं व्यथितम्,
स्वातन्त्र्यं विजितं विजितं विजितम्
रविनयनं पिहितं पिहितं पिहितम् ॥३॥

तुमुलोत्कोचे साहसिकारावे
परोपदेशे बहु मथितं मथितम्
शिविरे शिविरे ननु मुकुटे मुकुटे
दलग्रहपाण्डित्यं प्रथितं प्रथितम् ।
कुत्र कुतश्चलितं चलितं चलितम् ?
स्वातन्त्र्यं विजितं विजितं विजितम्
रविनयं पिहितं पिहितं पिहितम् ॥४॥

●

## द्यूते मग्नो गणिते भग्नः

कीदृशव्याकुलितोऽयं दिवसः पणे पणे ?

द्यूते मग्नो गणिते भग्नः
आतपजाले स्फीते नयने
गिरिमारूढः शिखिरे विजिते
गर्जन् गर्जन् वारिदशयने,
शूले शूले गच्छन् रभसो वने वने।
कीदृशव्याकुलितोऽयं दिवसः पणे पणे ॥१॥

उपलभमानः सूर्यं धरणिम्
प्रकिरन् पर्युषितं मधुप्रणयम्,
अनिजज्वरं बहु स्मारं स्मारम्
विमृशन् विमृशन् तनुश्वासभयम्
विकिरन् मुकुरं बिम्बं परितो जने जने।
कीदृशव्याकुलितोऽयं दिवसः पणे पणे ॥२॥

त्रसरेणुविपाके सञ्चूर्णः
निमिषो निमिषः कीर्णः कीर्णः,
गन्धवहे सुपरिमलव्याजे
मज्जासज्जाविभवः शीर्णः,
सरितो रक्तस्रावो रथितो रणे रणे।
कीदृशव्याकुलितोऽयं दिवसः पणे पणे ॥३॥

वर्त्मनि किंकर्तव्यविमूढे
धृत्वा विश्वं काले पुटके
तेन च क्षिप्तं निजदायित्वम्
गिरिवर निर्वाते तम उटजे।
तारकप्रश्ने मूर्छितत्रुटितः कणे कणे।
कीदृशव्याकुलितोऽयं दिवसः पणे पणे ॥४॥

## कोऽयं दिग्विभागः

जिह्वा जिह्वा विपुलहिमालयपृथुला
कोटिकहिमगिरिसत्ता सर्षपविन्दुः ।
शुक्तेः शुक्तेस्तर्षे जलवेलायाम्
संपीतो निस्सीमो जीवितसिन्धुः ॥१॥

सकलधरायां खलु कालक्रमचूर्णे
कोलाहल एष तु सम्राट् सञ्जातः
भस्मकरोगे शतशोदिनकरदर्पे
निविडं तिमिरं वर्षति क्षुधितप्रकाशः ॥२॥

काली लक्ष्मीः कलयति खड्गं शस्त्रम्
रोदिति मृतकैः प्रश्नैश्छिन्नं सत्यम्,
सामञ्जस्यं तथा श्मशाने क्षारः
किरणे किरणे बहु नर्टति च वैमत्यम् ॥३॥

अपशब्दसमूहे जीवति ननु तर्कः,
रक्तनिपाते कलहे श्वसिति च भाषा,
औदुम्बरकुसुमे सुखसुरभिप्रतिज्ञा,
शशशृङ्गे तूर्यं धमति च प्रत्याशा ॥४॥

सार्थिन् ! स्वार्थैः जहि नहि पवनं किरणम्,
वरटाः दशत न संमूर्छितमध्याह्नम्,
मशकाः ! दशत न विधुराकासौन्दर्यम्,
कोषक्रमे ! आद्धि न शाश्वतसिद्धान्तम् ॥५॥

## स्वस्तिनिवेशन !

पवनानां विटपे विटपे मननम्,
किशलयरसरक्तं हरितं हरितम्

स्वागत ! स्वागत ! स्वस्तिकमन्त्रे ॥१॥

आयामानां हृदि कुङ्कुमसत्यम्
हृद्गीते कुसुमं कलितं कलितम्

स्वागत ! स्वागत ! स्वस्तिकमन्त्रे ॥२॥

घनतिमिरवने दुग्धधवलप्रणतेः
सुपुलकनवनीतं ध्वनितं ध्वनितम्

स्वागत ! स्वागत ! स्वस्तिकमन्त्रे ॥३॥

अनुमानां तर्कानां स्वरशरणम्
बहुरक्तं नीलं विहितं विहितम्

स्वागत ! स्वागत ! स्वस्तिकमन्त्रे ॥४॥

जिज्ञासानां शतपथवनभ्रमणम्
निस्वनघटकं बहु स्वनितं स्वनितम्

स्वागत ! स्वागत ! स्वस्तिकमन्त्रे ॥५॥

निष्कर्षाणां स्वप्नाविलचक्रम्
शीर्षण्ये यन्त्रे रथितं रथितम्

स्वागत ! स्वागत ! स्वस्तिकमन्त्रे ॥६॥

प्रांशुनिदाघे शोषणसंग्रामे
जीवनशिवसाम्यं रचितं रचितम्

स्वागत ! स्वागत ! स्वस्तिकमन्त्रे ॥७॥



## विजयसंबोधनम्

जनविजय-नवचेतने ! आलोकमयि हे ।

युगपुरुषशुभरस्मिमाली प्रातरभिनव आगतोऽयम्,
सर्जनाशतदलमुकुलितः प्राणसुरभिर्भासितोऽयम् ।

वर्षशुभदं लक्ष्यपथपाथेयमयि हे ।
जनविजयनवचेतने ! आलोकमयि हे ॥१॥

राष्ट्रकुलमिह मिहिरभवसंगीतकिरणे याचमानम्,
गतिविलोडितसप्तसागरसेतुसरणिं भिक्षमाणम् ।

जहि दशमुखं स्वार्थजातं स्वस्तिमयि हे ।
जनविजयनवचेतने ! आलोकमयि हे ॥२॥

अद्य खल्वभिशापप्रसरे रुग्णताया व्रणव्यथायाः ।
दुःखनरको वसतिवासः क्षुन्निविडरावणकथायाः ।

जनय रामं लोकसंग्रहसिद्धिमयि हे !
विश्वसंघं च कुरु मूर्तं शक्तियियि हे !
जनविजयनवचेतने ! आलोकमयि हे ॥३॥

## सारङ्गीसहितम्

योगिन् ! गाय ! योगिन् गाय !
निर्गुणरागे निर्गुणगीतम् ।

अङ्गुलियायावरता तुदति
स्वनति च सारङ्गीलयहृदये,
तन्तोश्चैतन्ये जागरणे
रोमाञ्चे गन्धवहे विजये ।

लयरोमन्थः पुष्पशतम्
भावासारे शीतं शीतम्,

योगिन् ! गाय ! योगिन् ! गाय !
निर्गुणरागे निर्गुणगीतम् ॥१॥

विन्दौ मृदु गुञ्जति ध्वनिदुहिता
अज्ञाता खलु प्रतिध्वनिसहिता ।
मूके सिन्धौ झञ्झाग्रथिता
मसिसुलिखितशम्पारसरचिता ॥

आसक्तिप्रणतिसन्ताने
वैराग्यकणं कथमथ नीतम्

योगिन् ! गाय ! योगिन् ! गाय !
निर्गुणरागे निर्गुणगीतम् ॥२॥

सगुणो दिवसः, सगुणा रजनी
सगुणो मार्गः सगुणं लक्ष्यम्,
परिपश्यति तारा, ननु पृथ्वी
स्पृशति च नयथं जगतीसाक्ष्यम् ।

झङ्कृतिपरिमलमधुहसितम्
स्फुरणे कम्पे गतिविपरीतम्,
योगिन् ! गाय ! योगिन् ! गाय !
निर्गुणरागे निर्गुणगीतम् ॥३॥

ज्वालामालाबुद्बुदमध्ये
उपवनशाद्वलपृथुकान्तारः
खग ! मरुभूमौ मृगतृष्णायाम्
जीवितह्रासे जीवनधारः ।

वद ! मनसः सिकताकाव्ये
किं नोलिमपर्वत उपनीतम्
योगिन् ! गाय ! योगिन् गाय !
निर्गुणरागे निर्गुणगीतम् ॥४॥

●

## मञ्जुलधरणी

[ रागविहागः ]

चित्रितमानससुन्दरधरणी ॥१॥

कज्जलशब्दे तिमिरसमुद्रे राजतकानञ्चधमनी ॥२॥

ऊर्मिविपाके वात्याचक्रे सन्ततपावनतरणी ॥३॥

शून्यगुरुत्वाकर्षणनरके विबुधालयसुखसरणी ॥४॥

अगणितचञ्चलबालकवृन्दं तु वहन्ती प्रियजननी ॥५॥

शान्तमनोषाकंवर्ती सा लौकिकसंग्रहवरणी ॥६॥

विषदंशन भौगोलिकसीमा एषा तु सुधास्रविणी ॥७॥

कः क्लेशः का पीडा मातुः प्रतिकोषं वैतरणी ॥८॥

उटजे सौधे वसतौ वसतौ संघर्षे शुभकरणी ॥९॥

नभसः सीमापारे निर्भय-शाश्वतशेखरगमनी ॥१०॥

अद्यावधि चोल्काकेतूनां प्रथिता सफला शमनी ॥११॥

चित्रितमानससुन्दरधरणी ॥१॥

## निमिषाप्लावे मधुरं गीतम्

[ राहविहागः ]

श्वासजशैलराशिरुत्कुरुते ॥१॥

बटबीजविरावौघे हरिते भूकम्पस्वरं तनुते ॥२॥

रागाङ्कुरिते हृदि दले दले व्योम्नो मुद्रां मनुते ॥३॥

नक्ते चन्द्रं दिवसे सूर्यं सितरक्तभये धुवते ॥४॥

शतशः कज्जलयानविलुप्तं स्वप्नसमुद्रं सुनुते ॥५॥

अत्याक्रोशे वाग्मी तर्कस्त्वम्लं मौनं वृणुते ॥६॥

परिणतिघनकुक्षौ ज्वालमयं वाष्पजशिविरं स्तृणुते ॥७॥

कासारे तरलव्यथां पुञ्जीभूतां कः परिचिनुते ॥८॥

अन्धो वधिरो मसिपदरणितं कः पश्यति कः शृणुते॥९॥

श्वासजशैलराशिरुत्कुरुते ॥१॥

## मुरलोमर्मणि किम् ?

गतिरेतत्खलु जीवितमुक्तम्
एषानिगलति दृश्यं सर्वम्
का वंशी किं लोचनगर्वः ?
चेष्टा पृच्छति वर्णं वर्णम् ॥१॥

अभिधानं, शृणु, च किमुत्कुरुते
हृदये कुटिलं वातुलमार्गम्
अर्थे कोषाणां लोलुपताम्
कृपणत्वं रटति मुदा सार्धम् ॥२॥

काशश्च निमीलति यन्मर्मं
परिहसति तु ध्वान्तं यात्रायाम्
तच्चलितं ननु पदचापैः किम् ?
अतिमात्रं किं वै मात्रायाम् ॥३॥

अनुवादः को वद किं मूलम् ?
दिवसो दिवसो विमृशति नक्तम्
नक्तं नक्तं पणति तु दिवसम्
भिन्नमभावे भावे सक्तम् ॥४॥

●

## रत्नावाप्तिः

[ रागविहागः ]

हीरक आभ्यन्तरसंग्रामः ॥१॥

कर्तति काचं कठिनं पृथुलं योद् व्रणकरमुद्दामः ॥२॥

भेदेन विना ननु सर्वेषां रूपविभूषणकामः ॥३॥

आलोकसुरभिपूर्णो नित्यं भास्वरवृन्तारामः ॥४॥

व्यष्टिसमष्टितमः संपीतौ त्वगणितकिरणायामः ॥५॥

वाह्यसमाकुलस्कन्धावारे स हि ध्वंसनक्षुत्क्षामः ॥६॥

उपचयगीते दारुणमृत्योः लयकरभीमविरामः ॥७॥

उपवनकान्तारे वसतौ खलु सर्वविदितविधिवामः ॥८॥

आभ्यन्तरसंग्रामस्तु सदा वर्त्मनि स्वीकरणीयः ॥९॥

कण्टककुसुमे गोपुरप्रघणे तनुमानसवरणीयः ॥१०॥

वाह्यः समरः भूगोलस्थे परिसरगतत्यजनीयः ॥११॥

मस्तिष्क ! हृदय ! पन्था भूयात् शाश्वत एष ललामः ॥१२॥

अस्मिन् विचरति स्वः सिद्धीनां कुङ्कुमतिलकप्रणामः ॥१३॥

हीरक आभ्यन्तरसंग्रामः ॥१॥

●

## रक्तभ्रमणे केवलमनूदितम्

कः संवादः ? कः परिवादः ? कः प्रतिवादः ?
क्लान्तो दिवसः रोदिति रात्रिः, हसति प्रमादः।
जीवितयाञ्चायां श्वासः कुरुते त्वनुवादम्।
नीले, पीते, रक्ते ग्रन्थौ ग्रथितो ह्लादः ॥१॥

कज्जलवेशे मौनं वह्नौ मथितो न्यायः,
प्राणानां व्यापारे रवप्रथितश्चोपायः,
पविप्रश्ना सुमरसना बुद्धाः पर्वतद्रवणे,
मानसक्वाथप्रवाहे जाने कः समवायः ?२॥

रस ऊर्मिलता चञ्चति, चाञ्चति बहुश्लक्षणता,
त्रिप्रमा कुरुते कुरुते नवमीलितमभिधानम्,
कश्च कषायितस्वादः किं खलु मधुरं तनुते
ऊर्णनाभमानसकिरणानां गीतवितानम् ॥३॥

## स्थैर्य-शिखरे

आयामो न चलति, नहि चलति विरामः,
व्यवधानं प्रणमति परिचित इह पन्थाः,
शतशाद्वलशङ्का मस्तिष्के शम्पा,
किं खलु जानन्ति च तत्सैकतकन्थाः ॥१॥

शृणु ! शृणु ! हृदि भ्रान्तिः वादयते वंशीम्
सततं कोकिलवर्णं रौति च तर्कः
अनुदिवसं संघर्षो बहु हरितं हरितम्
लिखति च पत्रशतं, पठति च धूर्तार्कः ॥२॥

वातायनक्षोभान्ननु पश्यति सीमा
गन्धवहे स्वप्ने किं स्फीतिविलीना
कान्तारे विपुला वसतौ स्वरक्षीणा
खण्डितजिज्ञासा सैकतगतमीना ॥३॥

वद ! कोलाहलतुमुलत्वं स्वागतमिति !
पल्वलवेशे किं किं कथयति स्वगतम् ?
इच्छति किं नवसुमकण्टकप्रत्याशा
ग्रन्थौ मृगयति किं सन्दर्भं विगतम् ॥४॥

●

## अदृष्टमसिलिपिः

कण्टकमौनं सुमव्यपदेशम्
पश्यति बीजविकासः ।

शून्यापीडे स्वर्णिमश्वासाः
निशि कालायसदंशः
प्रथयन्ति तु वाणीं रथयन्ति तु
नयनं, वेल्लति वंशः ।१
विपिनं विपिनं गुप्तं तन्त्रम्
सरितागिरिपरिहासः,
कण्टकमौनं सुमव्यपदेशम्
पश्यति बीजविकासः ।२
विगतं मरकतमणिभं भूतम्,
भविता स्वस्तिकप्राणे,
गन्धवहे सुरभेरादेशः
प्रसृतो ज्योत्स्ना घ्राणे ।
शिखरे शिखरे किरणरहस्यम्
ज्वालायां मधुमासः,
कण्टकमौनं सुमव्यपदेशम्
पश्यति बीजविकासः । ३

दृष्टो देशो, दृष्टः कालः
आस्म् नहि दृष्टा सीमा,
अगणितगणितं मूकं भणितम्
सुन्दरपलभा भीमा ।
पङ्गुः तर्कः द्रवति कुतर्कः
ग्रावणि श्लक्ष्णो रासः,
कण्टकमौनं सुमव्यपदेशम्
पश्यति बीजविकासः ।४

उल्वणज्वाला ननु हिमवदनी,
उदयति सूर्यो नक्ते,
विन्दौ सिन्धुः प्रणमति रे खलु
अणुतां मसिलिपिव्यक्ते।
वर्त्मनि वर्त्मनि क्रोडे क्रोडे
एष विरोधाभासः।
कण्टकमौनं सुमव्यपदेशम्,
पश्यति बीजविकासः। ५

गतवति मधुरे मधुरे गीते
शब्दानामभिलाषः,
लिखिते ग्रन्थे मोचितग्रन्थौ
कथमयमक्षरनाशः।
पुलके रिक्तः कथनाङ्के कः
जडतायामायासः ?
कण्टकमौनं सुमव्यपदेशम्
पश्यति बीजविकासः। ६

आद्यन्तविहीने वर्धत इह
वाग्रहिता परिभाषा,
शुष्के कासारे मीनानाम्
जीवति खलु प्रत्याशा।
अरे विधे हे सैकतकणके
कथमथ सुरतरुलासः
कण्टकमौनं सुमव्यपदेशम्
पश्यति बीजविकासः। ७

## प्रश्नगतम्

वसुधायाः किं हसितम् ?
पीडायाः किं रुदितम् ?

अभिजातो लेसर एषः !
अभिजातो न्यूट्रान एषः !
सार्थिन् ! संलापो वेल्लति,
उड्डीनो बहुशो निगदति।
तेषां कः पुण्यविवर्तः ?
कः फलस्वादावर्तः ?

को जिज्ञासातर्कितपरिपाकः ?
बन्धुकुटुम्बक ?
वर्धापितमानवस्वप्नप्रयासः !
भाति तु सूर्यः,
पुनरपि भास्यति सकले परिणाहे
भास्यति रे अन्तरिक्षगीतं सततम्।

ताराणां राजतवंशी
रौति च रौति च प्राणप्रवाहे
रोष्यति पुलकाङ्कितसंनाहे !

शशिनो हृद्धमनम्
वर्षति पीयूषं खल्वमरत्वम्
ऊहापोहानां जगतामवगाहे।

आदर्शाः ! संघर्षाः ! शक्ते परमाजस्रे !
हे सत्य चिरन्तन !
हे न्याय सदाक्षुण्ण !
विकलायाश्च हिंसायाः
रागिण्यः सततमविकलाः !

करुणाः मधुराः मधुराः विपुलाः !
वसुधायाः किं हसितम् ?
पीडायाः किं रुदितम् ?
निगदन्तु च रे राष्ट्राणां भौगोलिकसीमाः !
निगदतु मानवश्रमवीथी भीमा !
आर्थिकलोलुपताया भ्रम ! वद त्वम्,
निगदतु कीर्तिपिपासायाः
सैकतविपिनम् ।
भण हे वद लिप्सा-सिंहासन ! त्वम् !
जीवित रे ! मृत्यो रे !

नहि युगमानैः
प्रत्युतशाश्वतयानैः
तोलय आशां नैराश्यं प्रणतविधानैः !
निगदतु जलमुक्ता विद्युत् विपुला,
असितवर्ण हीरक हे
तव स्वप्ने स्वप्ने भास्वरता पृथुला ।
दूरभाष चुम्बक हे !

कथमेतत्कोटिविडम्बनरूपम् ?
विद्युच्चुम्बकलहरीणामाहार्यं नवप्रत्नस्यूतम् ?
मधुरदूरदर्शनरणनालोडन ।
राडाराणां मौनविलोडन ।
जलयानविमानानां विक्षोभण ।

नक्ते नक्ते रोदिति गगनम्,
अनुदिनक्लिन्नं धरणीपटलम्,
अवधाने व्यवधाने तनुरेषा
अन्तरतमसंज्ञा कम्पेते ।
त्रिकालानां वाष्पाणि च वर्द्धन्ते ।
वसुधायाः किं हसितम् ?
पीडायाः किं रुदितम् ?

कल्पविटपा हे ! सत्तानाम्,
अन्ये तरवो हे ! रागाणाम्,

अयि शाखाः ! अस्तित्वानाम्
अयि प्रतिध्वनयः ! अङ्कुरितानां भाषाणाम् ।
आमुख ! मुखशत हे युद्धानाम्
वसुधायाः किं हसितम् ?
पीडायाः किं रुदितम् ?

नियतिवादिप्रचालितयानम्,
सर्वेषामन्तिमपरिणय एषः
गच्छति कं पन्थानम्
मन्दिरमस्जिदगिरिजानाम्
ईश्वरभवनानां किं च भविष्यन्मानम् ?
औषधगृहसकलचिकित्सालययूथानां किं च प्रमाणम् ?
निगदतु मन इह रे !
निगदतु वाणी रे !
निगदतु कर्म च रे !
पुनरपि पुनरपि तोलय
कार्याणां परिणामम् ।
पश्यतु मूकं वधिरम्
गणनाशाणम् ।
वसुधायाः किं हसितम् ?
पीडायाः किं रुदितम् ?

उन्मादप्रपीडित ! कृत्रिमदिनकर हे !
उन्मादविताडितपक्षाणां च समीरण हे !
दिवसा उन्मत्ता हे !
राका उन्मत्ता हे !
निर्माणानामक्षरपदसंघटनम्
रचयति विध्वंसानां मदिरालयरवणम् ।
यूयं सर्वे प्रलपन्ति सदा किम् ?
मूले चूले भाषन्ते किम् ?
पश्यन्ति च किम् ?
अद्य प्रतीक्षन्ते किम् ?
वसुधायाः किं हसितम् ?
पीडायाः किं रुदितम् ?

## संगीतस्वनितम्

अङ्कुरितप्रयासे नवशाखा
गायति गीतं नटति च रूपम्,
नृत्यति पत्रं किशलयरागे
पुष्पमलङ्कुरुते तरुभूपम् ।१

एषा खलु शारीरक-परिपाटी,
प्राणाः श्रवणौ वक्त्रं नयने
हस्तौ चरणौ पृष्ठप्रदेशः
मिलिताः प्रथिता जगतो मथने ।२

रुचिरं मधुरं मञ्जुलरचनम्
अनुप्राणिततालये सकलम्,
जीवितमेतत् क्षणकणनीतम्
जिजीविषा पथि चलति च विकलम् ।३

सत्तापरिवारः संसारः
बहुशस्तन्तुसमन्वितवीणा,
विज्ञानविचक्षणगायक हे !
परिचयनीया सा खलु प्रोणा ।४

तुमुले दिवसे, राकापाशे
किरणे किरणे गतिरमणीयम्,
संगीतं कलिमुकुलस्यूतम्,
इह मूले चूले नमनीयम् ।५

आख्या का व्याख्या सर्वेषाम्
दृश्या श्रवणीया शरणीया,
सामञ्जस्यं परमरहस्यम्
रूपकताले सरणि वंरणीया ।६

सामञ्जस्याभावश्चैषः
सुमकलिप्रत्यङ्गं संघर्षः,
किं कथनीयं किं नटनीयम् ?
अन्ते स हि स्यान् मृत्युविकर्षः । ७

## फेनकस्थापत्ये

[ रागधनाश्रीः ]

नभसो गङ्गायां स्वपनीयम् ।१

तारकसैकतदेशे वृन्दाविपिनं बहु नटनीयम् ।२
फेनककोमलज्योत्स्नाशिल्पे हृदि सौधं करणीयम् ।३
पाषाणप्रसारे सन्तापे प्रतिध्वनिवत् तरणीयम् ।४
निःसङ्गं रोमस्पर्शे रवि-वज्रं जगदपि कलनीयम् ।५
पुष्पे पुष्पे सुरभौ सुरभौ चाख्यानं पठनीयम् ।६
पत्रे पत्रे चेश्वरमुद्राटङ्कणमतिरम्यं वलनीयम् ।७
अगणितमिहिकादर्पणव्यङ्ग्यऽर्णवगीतं शरणीयम् ।८
शृणु सार्थिन् ! नहि सार्थे प्रत्युत एकान्तं चलनीयम् ।९
नभसो गङ्गयां स्वपनीयम् ।

## का जिज्ञासा ?

[ रागधनाश्री : ]

परिपश्यति कौशेयं ध्वान्तम् । १
स्वस्तिकभाले विजटितमिङ्गितशकलं मिहिकाक्षान्तम् । २
नयति च नयति च सौरभदंशः वासर-तर्क-वितर्कम् । ३
असिता पीडा चुम्बति श्लिष्यति निःस्वनस्वप्नविवर्तम् । ४
पुष्पितग्रन्थौ शतदलप्रश्नाः मृग्यन्त्युत्तररूपम् । ५
भीतेः शिविरे शिविरे विटपः संवदति विपुलयूपम् । ६
उत्कण्ठा नृत्यति विधुविहिता पवनप्रकोष्ठे मधुरम् । ७
अन्तर्हित-ज्योत्स्नामधुशब्दे रोदिति गीतं विधुरम् । ८
नहि प्रचलति कान्तारो, न गिरिः, मार्गे मूकः प्रहरी । ९
मुखरे कृत्रिमविद्युद्हासे व्रीडाव्यूढानगरी । १०
स्वीये कक्षे चैव प्रशान्ते ज्वालारणनं भ्रान्तम् । ११
परिपश्यति कौशेयं ध्वान्तम् ।

## इदानीम्

[ रागधनाश्रीः ]

प्रस्तरव्यङ्ग्ये छलना शीर्णा । १
ज्योत्स्नाचूर्णे हिमप्रत्याशा कुवलयपदवीकीर्णा । २
अभिधाने त्वभिधाने विपिनं तोलयति तु घनतिमिरम् । ३
शिखरे शिखरे तुङ्गाशङ्का वेधयति तु व्रणमिहिरम् । ४
भूकम्परसे गिरिहृदये खलु प्रवहति प्रस्तरभेदः । ५
ज्वालामुखप्रीतिप्रतीतौ रे शतविस्फूर्जथुवेगः । ६
रिक्तः शब्दः रिक्तश्चार्थः पिशुनपवनपृथुयाने । ७
किं किशलयनेपथ्यं, किं सुममञ्चं रसव्याख्याने । ८
आसाराणां ग्रन्थौ ग्रन्थौ सकला चेष्टा क्लिष्टा । ९
अभिलाषाप्रस्वेदितपटले नवतूली निर्विण्णा । १०
प्रस्तरव्यङ्ग्ये छलना शीर्णा । १

●

## पार्श्वगीतं किम् ?

शकुनं गीतचुल्लकं ज्योत्स्नाभरितम्,
प्रणयसंपुटं कज्जलशैलोच्छ्वासपूरितम्,
विश्वासो विकिरति व्याकुलपीतरसम्,
परिप्लवते व्यर्थं रूपकं सान्त्वनाशपथम् ॥१॥

अन्धा मूका खल्वालोकायामाः
स्खलिता निपतन्ति च कान्तारे कूपे गर्ते,
सन्ततयात्रायां शतशो भग्नाङ्गाः
नृत्यन्तो हृदये कोटिविवर्ते ॥२॥

हृदयहीनपवनः प्रथयति पांसुलताम्
समविषमे प्रस्तरपुटके शव इव रथितः
लतिकावीथ्यां शततरुतोरणमध्ये
वंशसमूहे स्वागतवर्षे निर्ममथितः ॥३॥

सांमुख्ये हतवाचो मूर्खा मार्गाः
आरोहणक्लान्ताः सकले मञ्चे नेपथ्ये,
पार्श्वे पार्श्वे विकिरन्ति सदा प्रश्नान्
अभियाने स्फुटिताः स्फुटिता बहुशो वैमत्ये ॥४॥

उद्भ्रान्ता दिवसानां धमनी धमनी
प्रचरति हृदि शाद्वलक्षौमबुभुक्षाव्यतिरेके
व्यभिचरति कथं च कुहूः मौनप्रलापे ?
दुष्टतूलिका राका किं सुलिखति रससेके ॥५॥

## वृन्तपर्यन्तम्

काञ्चनश्वासो राजतगन्धः
पुष्पमिदं वन ! स्वप्नोऽयं वा
अनामक्षितिजं विन्दौ विन्दौ
सिन्धौ कणिकान्तवहित्रं वा ॥१॥

चेष्टा मूले हरिता रक्ता,
चूले कण्टकपृच्छाश्लिष्टा,
अभिधानं रौति त्वनिकेतम्
शिक्षा शतदलयने क्लिष्टा ॥२॥

परिणतिरेषा ज्वलिता सरिता,
शैलः शैलो बुद्बुदमथितः
अम्लघनागमफेनकचित्रे
अक्षांशो देशान्तररथितः ॥३॥

का रववडिशा भूगोलकलिः ?
पुलकितसिध्मे ज्योतिस्तिलकम्
कर्षति किं धूमायितमुकुरे
हरितप्रमाणाद् हस्तामलकम् ॥४॥

## शून्यस्पर्शो

सीमारहिते कज्जलपरिप्रश्ने
उन्मज्जति पक्षाघातपलितशैलः
शीर्षण्यजले पल्वलविश्रम्भे
यातो विपिनप्रतिमास्वर्णिमचैलः ॥१॥

बन्धुत्वं कथमपरिग्रहदेशे
रचयति प्रणतै कलिकां कुसुमं मुकुलम् ।
सुरभिकथास्पर्शो दर्शकवृन्दम्
धावति चित्रे चित्रे मूढं विकलम् ॥२॥

प्रच्छन्ने हस्ते दशजिज्ञासा
ददति च व्यालोडितसामुद्रिकशस्त्रम् ।
कुरुते रेखेङ्गितवामनविभवम्,
तुङ्गप्रतिज्ञाबद्धं परमन्त्रिरस्त्रम् ॥३॥

पविमर्दलमौनं घनसंकलितम्
मथितं कुरुते स्वप्नानामुष्णोषम्,
अरविं पश्य व्रीडाकबरी, रे
इह पाषाणे मृग्यति कथाशिरीषम् ॥४॥

●

## आर्द्रा पाली

छलयसि त्वं स्फुरणे घने तृषे!
कलयसि किं गणितं रणे हृषे! ॥१॥

उपवनहृदये मिहिकामथिता
किशलयसरणौ व्रणितामथिता ॥२॥

छलयसि त्वं स्फुरणे घने तृषे।
कलयसि किं गणितं रणे हृषे।

दिनकरविरवैः निगडितधरणी,
हिमकरलुलिता नभसः करणी।

छलयसि त्वं स्फुरणे घने तृषे
कलयसि.............. हृषे ॥३॥

विचलति विपिनं प्रणयविरचितम्,
स्वनति च नयनं विरहविजडितम्।

छलयसि त्वं स्फुरणे घने तृषे,
कलयसि.............. हृषे ॥४॥

मृगभ्रम इह प्रणमति नतकणशः,
विकिरति विपणं समयः क्षणशः।

छलयसि त्वं स्फुरणे घने तृषे,
कलयसि.............. हृषे ॥५॥

शतदलपिशुनं नवपणकुसुमम्
व्यथयति गीतं पथि पथि विषमम्।

छलयसि त्वं स्फुरणे घने तृषे
कलयसि किं गणितं रणे हृषे ॥६॥

●

## उच्चावर्तनम्

किरणैः किरणैः रचिता प्रतिमा
तिमिरैः बहु पूजितसंकुलता,
कलिकाकुसुमैः वन याजित रे!
प्रणताः सुरभिः विधुता रविता ।।१।।

कविताप्रथिता मथिता मधुता
शतपावनता प्रसरे पवनः
कुरुते मुरलीसुषिरे धमनम्
रसभासितव्यापृतिसंकलनः ।।२।।

अनियन्त्रितभावनसाक्षरता
हरितं हरितं विपिने विधृता,
शबला विपुला भवगीतिप्रथा
नयने मुखरा श्रवणे निभृता ।।३।।

तनुसैकतजं मृगभ्रान्तिजलम्
कुरुते हृदि वास्तवनीरबलम् ।।४।।

## विद्युत्प्रपानकम्

शुक्तौ सिन्धुः सर्षपहृदये गगनम्,
जयतु च दैर्घ्यं, लघुता गायति गीतम्।
ऊर्जस्वितसूर्यश्चन्द्रः परमाणौ,
सिद्धैः वृन्दं सर्वं बलमुपनीतम् ॥१॥

हसितं रुदितं जीवितमथितं प्रथितम्,
उदितो विगतः सकलश्चेष्टायासः,
दैनन्दिनकार्ये खलु कारणयूथे
दृष्टादृष्टः सर्वस्त्वाशापाशः ॥२॥

श्रृणु ! तडिदायामे ध्वान्ते परिचिनुते
रूपं रूपावरणं भावनशरणम्।
तनुते जगदपि पृच्छामिच्छां शिक्षाम्
आकलयति प्रस्तरसैकतसन्तरणम् ॥३॥

कुसुमप्रदेशे ननु कण्टकपरिवेशे
प्रस्फुरति च स्फुरति च संवेदनप्रतिमा,
तन्मात्रनिवेशे षड्रससंहरणे
इह भासन्ते लघिमा गरिमा महिमा ॥४॥

●

## प्रमामयि ! प्रमामय हे !

[ रागधनाश्रीः ]

संवेदन हे ! संप्रेषण हे ! १

द्रष्टादर्शकचिरदृष्टिपरे विश्वे प्रियदर्शन हे ! २

सृष्टिविधातः ! सृष्टिविधातुः शक्तेरभिव्यक्ते हे ! ३

प्रतिपालक ! प्रतिपालकशक्ते ! सममधुश्रीविवृते हे ! ४

अन्तिममुकुरे रुद्राभिध हे ! ननु शम्भुविविक्ते हे ! ५

अर्थान्वितसुरभौ समप्रकृतेः पुरुषप्रतिपत्ते हे ! ६

मुखरितवाणीगीतविराजितकवितासंमोहन हे ! ७

अणुपरमाणौ चाशीर्वादात्मककोटिकप्रणमन हे ! ८

संवेदन हे ! संप्रेषण हे ! ९



## प्रश्नाविलता !

[ रागधनाश्रीः ]

धमनी धमनी सैकतवेला ! १

आद्रे 'झिरझिर' मुखरितहेत्वाभासे पूर्वा-खेला । २

कुसुमे कुसुमे रञ्जितस्वप्ने मुद्राविपणिप्रभातम् । ३

गीताङ्कुरिते मधुकरहृदये रूपैः कैरनुयातम् ? ४

मिहिकास्फोटे किरणारोपे भासत इह का नवता ? ५

अनुबन्धे तृणविटपच्छाया किं पथि जागरजवता ? ६

पल्लवपल्लवमथिता प्रथिता कथमालोकविवक्षा ? ७

इत्थंभूता सरिता सरिता द्रविता भ्रान्ता कक्षा । ८

धावति क्षणपारावारो रे हसति स्वैरवहेला । ९

कुत आयाति च कुत्र च गच्छति अनुरेखितरसमेला । १०

धमनी धमनी सैकतवेला । १

●

## सरितायां—पुलिने

[ रागधनाश्रीः ]

कति कलिकाः रोमन्थनिदाने ॥१॥

नीलिमस्मृतिमरकंतनिद्रा रे प्रसृता स्वप्नविमाने ॥२॥

सलिलसमाधौ ह्यूर्मिलज्योत्स्ना शङ्का प्रचरतिसुरभौ॥३॥

अपराजितपृच्छा रजनीं किं मृग्यति प्राणप्रणिधौ ॥४॥

आरोहति गीतं सोपानं, नीरवक्षुधिता रथ्याः ॥५॥

विटपे विटपे ग्रन्थौ ग्रन्थौ शतशतमुकुलितकथ्याः ॥६॥

छाया नवपरिभाषां कुरुते स्थैर्ये तिमिरप्रथायाः ॥७॥

रोदिति मूकं गत्वरजडता, अन्ते भासकथायाः ॥८॥

शाखा गणयति वृश्चिकसर्पान् बहुनिर्भीकवितानेे ॥९॥

ज्योतिः कक्षकर्तकैः पत्रं पत्रं व्यथितं शाणे ॥१०॥

कति कलिकाः रोमन्थनिदाने ॥

## वीप्साविपिने

[ रागघनाश्रीः ]

मांसलज्योत्स्ना स्पर्शे स्पर्शे ॥१॥
पेशलपुलकं राकावलितं चन्द्रे तर्षे तर्षे ॥२॥
सौरभसंपुटके मधुनृत्यति कौमुदवनरोमाञ्चः ॥३॥
अमृतं स्रवति तु हिमकरसत्ये राजतकण्टकप्रान्तः ॥४॥
अनृते श्लिष्टे द्विप्रश्नतनौ उत्तरसुषमा लुप्ता ॥५॥
अक्षतचन्दनयात्रायां कीदृशकाञ्चनस्मृतिरुप्ता ॥६॥
अभिधानविरहिते तादात्म्ये वीप्सा परिष्वजति वने ॥७॥
उन्मिषति च नयनं रसग्रहणे परिव्याप्ते तडिद्घने ॥८॥
सुरसरिता चातृप्तेः प्रवहति पुलिने हर्षे हर्षे ॥९॥
मांसलज्योत्स्ना स्पर्शे स्पर्शे ॥१॥

•

## रजनीमुद्रा

आत्मनिलय ! ते हरिते हरिते
चरणे चरणे बिम्बितहृदयम् ।
द्विविधायां शतधाप्रोज्वलने
कुसुमं स्फुरयति वह्निनिचयम् ॥१॥

अभिलाषायाः सूत्रे सूत्रे
रजनीमुद्रा वर्षति काशम् ।
दिनकरसंज्ञायां छविस्वप्नाः
कुर्वन्ति च गन्धवहं लासम् ॥२॥

परिमलकणिका सौरभक्षणिका
अनुवदति च चेष्टापर्युषितम्,
वामनप्रकरणवाष्पस्फोटे
दृष्टेर्नीडे मतिसंपुटितम् ॥३॥

शाखाचङ्क्रमणे मधुयाच्ञा
लुण्ठनपांसुलझञ्झाप्रणतिः ।
नैराश्यवने विटपविवेकः
आवामानां निगडितप्रगतिः ॥४॥
आत्मनिलय ! ते द्वैधीभावः
प्रणयरथे सामुद्रिकहावः ॥५॥

●

## प्रश्नदीपावली

आनन ! इह कतम उपाधिः ?
कानन ! इह कतमोव्याधिः ?
तिमिराश्लेषे को दीपः ?
आर्णववेशे को द्वीपः ?१।।

हरिते पत्रे का पृच्छा ?
विकचे कुसुमे का शिक्षा ?
उदयति गगने को दर्पः ?
वदः को हिमकरसन्दर्भः !२।।

तादात्म्ये किं मधुगीतम् ?
पार्थक्ये किं संगीतम् ?
काचसुमे का च प्रतीची ?
कोदची का चावाची ?३।।

गच्छति तिष्ठति किं साधंम् ?
व्यक्तिः किं पृच्छति सार्थम् ?
ज्योत्स्ना किं पठति च शास्त्रम् ?
दिवसः कलयति किं शस्त्रम् ?४।।

वर्षति परिणतिरेषा किम् ?
हृदि स्फुरति च मणिक्यं किम् ?
अथव्याप्ती कः संवादः ?
इतिवादे कः प्रतिवादः ?५।।

●

## प्रांशुप्रश्ने

उदितं प्रांशुप्रश्ने कथमुत्तरभासम्
अतिथिघने परिचितकुसुमं नवलविकासम् ?
मधुमय–गीतांशुकवस्त्रं विदधाति कुहूः
अजिरे मे नृत्यति पुनरपि वातावरणम्,
उद्वेलितव्याकुलितावाञ्छापरिरम्भे
जागरितं पुनरपि स्वप्नानां कलिशरणम् ॥
उदितं प्रांशुप्रश्ने कथमुत्तरभासम्
अतिथिघने परिचितकुसुमं नवलविकासम् ॥१॥

नीरवशब्दानां हृदये क्रीडति राका,
शान्तेः नयने स्फुरति च स्फुरति च प्रियचित्रम्,
बहुनागदर्शितशून्यगगनपरिभाषायाम्
साकारत्वं रचयति सुमसदृशं मित्रम् ।
उदितं प्रांशुप्रश्ने कथमुत्तरभासम्
अतिथिघने परिचितकुसुमं नवलविकासम्॥२॥

श्वासे पवनः पुनरपि वादयते वंशम्
अङ्गे चाङ्गे सुरभेः संप्रेषितवीणा ।
दृश्यानां प्रतिध्वनिप्रघणे पेशलसरणौ
संवेदनरूपोत्कण्ठा नन्वासीना ।
उदितं प्रांशुप्रश्ने कथमुत्तरभासम्
अतिथिघने परिचितकुसुमं नवलविकासम् ?३॥

छलने त्वं क्षणमवतिष्ठस्व च भूकम्पे,
धमनीझञ्झा विकिरति विगतं व्याख्यानम् ।
इह चञ्चति वदति च शाकुन्तललावण्यम्
प्रणयजगन्धवहानां पाटलसंख्यानम्
उदितं प्रांशुप्रश्ने कथमुत्तरभासम्
अतिथिघने परिचितकुसुमं नवलविकासम् ?४॥

## वर्तिकाशिरसि

आदिमक्षोभः,
प्रत्नो रोगः ।

कदलीच्छाया वपति तु कवितास्,
प्राङ्गणमसिता ज्योत्स्नावलिता,
विकसति खञ्जे पांसुलप्रश्ने
प्राकाशव्यथा मिहिकाकलिका ।

आदिमक्षोभः,
क्वाथकरोगः ॥१॥

शीर्षकशकले वार्ताविकले
उदयति शून्ये निखिलो ग्रन्थः,
तिमिरोत्कीर्णा सिंहप्रतिमा,
तत्रतु कीर्णो गर्जनरोमन्थः ।

आदिमक्षोभः,
रसतातोषः ॥२॥

सुममस्तिष्के सौरभहृदये
शतशतह्लादा-कठिनं शूलम्,
विटपे विटपे लतिकासरणौ
बध्नाति तु किं क्षौमं फूलम् ?

आदिमक्षोभः,
चेष्टालोकः ॥३॥

प्रस्तरभाषा द्रविता सरिता
इह परिप्लवते मरुतनुदेशः,
पल्वलतापिच्छिलताह्वाने
गगने प्रथितो जाङ्गलशेषः ।

आदिमक्षोभः,
वननिर्मोकः ॥४॥

●

## दर्पणहेतुः प्रश्नप्रकाशः

केन्द्रे तिमिरं प्रान्ते ज्योत्स्ना,
वाष्पाङ्कस् त्वङ्गुलिनिर्देशे,
संसृतिरेषा जागरणपणे
मधुकरस्वप्नाः कालक्षेपे ॥१॥

ममताविभुताप्राणायामः
इह रूपनिरूपण आयामः,
क्रीडति झञ्झा व्रीड्यति शान्तिः
अत्र तु विहसति हृदयप्रणामः ॥२॥

साक्षाद् विन्दोः पारे शैलः,
गगन ! धरणि ! तव एष निवासः,
अत्र तु रक्तं नाशकगणितम्
दर्पणहेतुः प्रश्नप्रकाशः ॥३॥

पृच्छति पवनकषायितबिम्बम्
द्वारे कः शब्दः का भाषा ?–
किं च परवर्तनप्रतिबिम्बम् ?
एतन्नयनं सा नयनाशा ॥४॥

## ज्यौतिषजुषाम्

द्वारे द्वारे सत्तारक्तम्,
प्रचरति, विक्रीणाति च सूर्यम्,
चेष्टाक्षितिजं श्रान्तं क्लान्तम्
वादयते संसृतिगतितूर्यम् ॥१॥

अविरलतर्को जोषं जोषम्,
क्षिप्यति सकलकथासन्तरणे,
कमलनिवासे सरसिजबन्धुम्,
सर्वं याति च छायाशरणे ॥२॥

लम्बति लम्बति कायाप्रश्नः
लम्बति व्रीड्यति ध्वनिशुक्लत्वम्
तारा विपणति दृष्टिविरोधम्,
शेते क्रमशः सुमविकलत्वम् ॥३॥

लीयत इह क्षीयत इह तर्षे
गगनं, धरणी, विघटितहर्षे,
द्वारे द्वारे सत्तारक्तम्
वपति च मौनं ज्यौतिषसक्तम् ॥४॥

•

## अहस्ताक्षरितोऽट्टहासः

निद्राबन्धैस्तिमिराचलशिखरे
आरोढुं भयमुकुटाः रसवन्तः
मधुस्वप्ना उड्डीना कृत्स्नायाम्
शून्यसीम्नि मुक्ताः चिन्वन्तः ॥१॥

अर्धमनोयोगैः भूमौ चन्द्रम्
आनेतुं नहि ते सफलायासाः,
कक्षे रक्षितग्रन्थान् बहुशकलान्
आविलसंपुटके क्षेपितवन्तः ॥२॥

अद्य तु दीपक कज्जलमसितां रे
शब्दरवेभ्यो हृदये मस्तिष्के
सुखमावण्टन्तश्चावण्टन्तः
शेरत उद्दीप्ता रात्रिसमुदये ॥३॥

अधुना जागरणं स्वर्णालम्बे
कष्टं प्रचलति ननु प्रचलति कष्टम्,
हरितं हरितं गोपनव्यपदेशम्
रक्तं पीतं नीलं रसमिथकम् ॥४॥

उत्प्लुत्य च लुलितं रमसोत्प्लुत्य
इच्छति गन्तुं विभ्रान्तेः पारे,
इच्छति सर्वायामान् दन्तुरितान्
इह बन्धुं ताम्बूलपिटकतारे ॥५॥

●

## वैजयन्त्यः काचकूपीबद्धविस्फोटस्य

अद्यत्वे मध्याह्ने ह्यद्वैतमिस्त्रेयम्
विरचय्य कथं मौनां कोलाहलमिहिकाम्
उत्सृजति कथं द्वारे द्वारे संकुलतायाम्
मत्तां व्यालीराजिं पिहितां चापिहिताम् ॥१॥

दष्ट्वा कान्तारं शैलान् लतिकाः
आशामांसं पवनास्थीन् झञ्झोच्छ्वासान्
इच्छन्ति च खलुताः सर्वाः कर्तुं क्षारान्
अलोडितहृदि दोलितमस्तिष्के मुकुलान् ॥२॥

प्रतिव्युत्कान्तानां नौकाजलयानानाम्
सदृशीनां मानववसतीनां नगरीणाम्
का बालकथा को वै कण्टकितस्तर्कः
सार्वत्रिकपांसुलहासानां धमनीनाम् ॥३॥

पवनः पवनः सञ्जातः कालाङ्गारः
छद्मत्वे तत्र च शृणु दृष्टेः परिरम्भे
गर्वोद्धतवक्रो वक्रो ज्योतिः कूलः
दत्ते वह्निं विस्फालितमरकत दम्भे ॥४॥

अपशकुनानां बहुकर्बनयद्धोषितवायुम्
उद्गिरति च यो धूमकेतुरेषहि देशे
उत्सहते निखिलालोकं भूमौ व्याप्तम्
मार्जनघातैः दूरीकर्तुं परिवेशे ॥५॥

हा सप्तर्षे ! हा ध्रुवतारकादिबोध !
परिणाहरहितभयकरनिःस्वनझञ्झायाम्
उर्मिलसागर एते ह्युल्कलिकावाता :
शब्दैरणुवीक्षणदूरेक्षणयन्त्राणाम् ॥६॥

मस्तिष्कं क्षपयन्ति तु विस्फूर्जथुवेगैः
इत्थं यच्छान्तेश्छत्रे जटिता वह्नेः
कीलाः प्रतिभासन्ते तनु प्रतिभासन्ते
परमाणुकृतामिद्रवजनबमसदृशा रे ॥७॥

आभास्तेषां लेसरकिरणैः राजन्ते
हृदयविदारककरुणमृत्युना च म्रियन्ते
हरितैः पत्रैः पुष्पैः नानामधुसुफलैः
संभृतकाञ्चनवत्सरयूथाः क्षीयन्ते ॥८॥

वनवञ्चितधमद्रहृदयविलुलितदिवसानाम्
पश्यच निबन्धं वाष्पितशतमुखपतनम्,
ज्योत्स्नादुग्धं विषसंपृक्तं सञ्जातम्
स्वप्ना यान्तिजडत्वं सर्वं गतिरवणत्वम् ॥९॥

## पैशुन्यं परिच्छायानाम्

इह संप्रति खेलति नामविहीना
निःस्वनता गोपनमार्गणखेलाम्,
रूपदर्शितपीडाप्राचीवातैः
पश्चिमपवनैः मृग्यति स्मितवेलाम् ॥१॥

जनयति प्रथयति ननु नयनावरणे
एकाकित्वं शतप्रश्नाकाशम्,
अनुरेखित-लेखितपिष्टं दलितम्
लोचनसंपुटके धरावकाशम् ॥२॥

दुग्धं च पिबन्तश्चन्द्रकविन्दौ
भ्रष्टाः स्वप्नानां प्राङ्गणप्रान्ताः,
आमन्त्रण जाले कज्जलनिद्रे
किरणानां पुटके मुखरितध्वान्ताः ॥३॥

शब्दानां कल्पतरौ सूतानि
सिद्धाभ्यर्थफलानि च शाखासु,
ज्योष्ठस्य तु वह्नेः स्मृतिरथभूतम्
हरितं श्रावणमिषितं शाखासु ॥४॥

ज्योत्स्नाया हृदयस्य च शकलम्
शकलं कर्गदखण्डं सञ्जातम्,
परिचयरसवातुलकज्जलद्रवणैः
अमृतं गीतं कुरुते च प्रभातम् ॥५॥

चञ्चति चञ्चति संभ्रम उन्मेषे
वक्षसि निगडितकौशेयाज्वाला,
विकचानां बहु सुरभितस्पर्शानाम्
उड्डीना गगने रञ्जितमाला ॥६॥

हृदयेनसमं मस्तिष्कस्य च ये
चपलाविल-मधुकरमाधवसमयाः
उत्कण्ठारणिता मुरलीसंकाशाः
प्रघणे प्रघणे रत्नजटितविनयाः ॥७॥

मरुव्यपदेशे मिथ्या शतशपथाः
उद्वेलननाभौ खलु दुर्ललिताः
विकिरणजाले च परिच्छायानाम्
पैशुन्यव्याख्या वीप्सावलिताः ॥८॥

●

## अद्यत्वस्य भस्मानि

का देवी पीडा ? को देवः क्षोभः ?
वद प्रश्नशिवालय ! वद गीतेः मित्रो !
कस्तर्कप्रदीपः ? का श्रद्धावर्तिः !
वद मन्दिरप्रमे ! वद पूजारिक्ते ? ॥१॥

सुमनसि सुमनसि झञ्झा कुरुते तारम्
शङ्खध्वननं, ध्वान्तप्रतिमामननम्
खञ्जं हृदयं लुञ्जं ननु मस्तिष्कम्
व्यर्थं कुरुतः कज्जलशङ्कागणनम् ॥२॥

वंशीच्छिद्रे निगडितनिगडितदेशः,
वीणातन्तुषु रवितन्वीकृतकालः,
गन्धवहे प्रसरति बहुकिरणक्वाथः
व्यालविरचितः शतजिज्ञासाजालः ॥३॥

बन्धक आकाशो विक्रीता वसुधा
शववत् सर्वे मार्गाः स्कन्धे स्कन्धे
काचविचूर्णा देवार्चनपरिपाटी
का भुक्तिः ? का मुक्तिः वन्धे वन्धे ॥४॥

दर्शनमैत्रीक्षारे मृग्यसि मिहिके !
किं सलिलं, किं चैतन्यं कां सरिताम् ?
अपशब्दं भुङ्क्ते चोद्धतमरुता किम् ?
छायां परिचिनु दिवसाध्मानैः भरिताम् ॥५॥

•

## संकोचात्

रोमकूपे जलधिं नयनावरणे शैलम्
वहतां वहतां स्वप्नानां पदक्लान्तिर्जाता
रोदितिविधुरा निगडितज्योत्स्ना चानुस्वारे
शाणोल्लीढे व्यङ्ग्ये रविविधुसत्ता याता ॥१॥

इङ्गितलुप्ता धमनीधमने तारकयात्रा,
नक्ताह्वाने सर्षपबीजे गगनं लुप्तम्,
अर्धविसर्गे निस्सीमेच्छालेखा गुप्ता,
राजिकाप्रमाणे ननुचपलाध्मानं सुप्तम् ॥२॥

पूर्णविरामे लघ्वीकृतरूपो विश्वाध्वा
उल्काकनीनिकायां काशंवत्सरं क्षीणम्,
जीवित रे ! जीवित रे ! वद खाते सोपाने
कोषे कोषे रक्ताग्निकणे कथं विलीनम् ? ३॥

उपलब्धिः का ? चेष्टा का ? लक्ष्यं किं चलने
कक्षे शून्यास्तूष्णीं विकला उडुगणकक्षाः,
चलनकलनराशिकलनकवितामानोन्मानैः
वद विश्वेऽस्मिन् कास्ते हृदये क्षान्तिविवक्षाः॥४॥

•

## कस्यां भूमिकायाम् ?

आस्थे ! पूजे ! श्रद्धे ! किं ते कथनीयम् ?
वर्त्मनि, सोपाने, शिखरे किं नटनीयम् ?
कस्ते देवो देवायतने रमणीये ?
कस्ते भावो धूपोद्घोषे कमनीये ? ॥१॥

पाषाणस्वरूपे का ते कुसुममनीषा ?
प्राचीरे का ते वद सौरभविजिगीषा ?—
कर्णपरम्परया प्रतिदिनघण्टाघटने
वाद्यविवादे भावनमधुराक्षररटने ॥२॥

का परिपाटी मननारामितसंघटने ?
कस्ते निष्कर्षः वारिदशम्पामथने ?
कः किं पृच्छति वाष्पं मुञ्चञ्छैलम् ?
वदति रहस्यं किं दिनकरस्वर्णिमतैलम् ॥३॥

कस्मिन् तादात्म्ये गगनं शून्यं जातम् ?
कस्मिन् पाषण्डे सिन्धुत्वं मरुतां यातम् ?
आस्थे ! पूजे ! श्रद्धे ! किं ते वरणीयम् ?
ज्योतिः सीमापारे किं ते भ्रमणीयम् ? ॥४॥

अयि ! सर्वस्मिन् शेषे किं ते कथनीयम् ?
सकलयवनिकापाते किं ते नटनीयम् ?

## अयि परमाणो !

अयि परमाणो ! मा विर्वासय ! मा दह स्वाश्रयवसुधाम्,
पवनस्फोते मति-विपरीते मा लाञ्छय निज लघुताम्,
पूजय ! पूजय ! सत्यन्यायाहिंसाविकचां विभुताम्,
रविस्पर्धी विधुप्रतिद्वन्द्वी त्व वाञ्छन च तयोः प्रभुताम् ॥१॥

रे ! ज्वालाज्वालनभावस्ते मस्तिष्के बालिशहृदये,
मधुपूरितसुमपरिमल इव भव कोमलशतदलविनये,
धाताभव विष्णुर्भव शम्भुः शीतलस्नेहसमुदये,
न हि कुरु निगडं नहि करबन्धं हरिते क्षैतिजवलये ॥२॥

पठ रे पठ त्वं तारकभवने मसृणां राकाभाषाम्,
प्रणम च प्रणम च शान्तेर्देवीं शतकुसुमाकरहासाम्,
अनुसर ! अनुसर ! नभसोगीतिं वीणावाणीलासाम्,
शुक इव भव, पिक इव भव त्वं रट मानवतापरिभाषाम् ॥३॥

नहि यम इव भव मृत्युकिरीटी, नैशतमस्युत्सेकिन् !
बहु पाण्डित्यस्फोटे नृत्य न रे उन्मद ! अविवेकिन् !
रचय ! रचय ! जीवितकैलासं चल हिमगिरि संपर्किन् !
मा कुरु विषवमनममृतमुखात् निर्माणे मधुपर्किन् !४॥

●

## कथमेतत्

तिमिरे तिमिरे घोरयुयुत्सा,
किरणे किरणे भयचीत्कारः,
कोणे कोणे कण्टककटुता,
पवने पवने हाहाकारः ॥१॥

उदयति शङ्कारावे चन्द्रः,
ज्वलति च क्रोधाद् रक्तः सूर्यः,
मस्तकप्रान्ते कम्पिततारा:,
केशे ध्वनति च मिहिका-तूर्यः ॥२॥

आरामे को झञ्झावातः ?
शैले द्रवति च वज्रघातः,
द्रोणीहृदये सरति च वाष्पम्,
मार्गे मार्गे चोल्कापातः ॥३॥

कलिका कलिका हुतभुक्लेशः
कुसुममुखे विस्फूर्जथुलेखः
प्रसवे प्रसवे निगडितशान्तिः
गुप्ते मूले रोदिति देशः ॥४॥

रक्तविरञ्जित नवलप्रभातः
शतव्रणपीडारखचितासन्ध्या,
पन्नगपाशे हा मध्याह्नः
इत्थं सकला चेष्टा वन्ध्या ॥५॥

●

## कोऽयं क्षोभः ? कस्त्वम् ?

तिमिरोच्चंद्वासोपमशून्यः शून्यः कः
सूक्ष्मः सूक्ष्मः तिक्ताकाशतरङ्गः ?
पिटपे विटपे लतिकायां लतिकायाम्
पत्रे ननु पवनोऽङ्कितव्यङ्ग्यः ! १

अनुगुञ्जितभारहितप्रतिध्वनिरेषः
तौले खलु दुर्वहमसिप्रस्तरशैलः,
भित्तौ प्रघणे शतभूकम्पादेशः,
धूमानां श्वासावरोधिविषचैलः ॥२॥

शम्पालोकविवर्तो रुद्धे कक्षे
नग्नो दिग्भ्रम एष च मृगभ्रम एषः,
प्रश्नाङ्कनशीलो विस्फूर्जथुवेगः
आयसपुटके वैश्वानरशम एषः ॥३॥

छविकालिमा च शोषककर्गदपत्रे
मनोरथानां यात्रायां दिक्शूलः
पाषाणे धमनं निःस्वनतावपनम्'
जानाति नगन्तव्यं जडताचूलः ॥४॥

●

## वह्निधूमसन्त्रासः

मध्याह्ने मरकतमस्तात् तुङ्गललाटात्
वर्षति नवसभ्यत्वे स्वर्णिमस्वप्नसुधाम्,
सूर्यः संप्रति नन्दनकानसंप्राप्तः
सिञ्चति नवसंस्कृत्याशीर्वादैः वसुधाम् ॥१॥

मार्गो मार्गः स्नातः खलु पीयूषघटैः
शुभशुभ्रैः पूर्णेन्दुमतीराकानीतैः,
विश्वकृते शम्पा गुम्फति चम्पकलामाम्,
प्रणतिः हरिता चानीता वारिदप्रीतैः ॥२॥

उटजे सौधे विहसत्याशाप्रत्याशा,
मुखरिततूर्या विज्ञानमहत्वाकाङ्क्षा,
किन्तु कथं ग्रहणं भूमेः वालिशक्षितिजे
उपवनमध्ये किं रोदिति जीवितयाञ्चा ॥३॥

आयसमत्स्यानामुल्वणक्रीडनकानाम्
बहुविध्वंसाहरणं, नाशसमारोहः,
उच्छलरौद्रं विहसति ननु शीतं युद्धम्
तत्राहमहमिकाव्यापृत ऊहापोहः ॥४॥

मधुकरगुञ्जितचन्दनवनपेशलपवने
वह्निः वह्निः धूमो धूमश्चेतिरवः
विस्फोटभयादोहनकोलाहलमध्ये
हृदये हृदये बमस्वरविस्फूर्जथुः नवः ॥५॥

●

## प्रार्थयै शून्यं कम् ?

अक्षुण्णं संभरितं शून्यम्,
पल्लवितं सुमकलितं शून्यम्,
कस्त्वं कोलाहलपाषाण !
शब्दानां चिरशशकविषाण ! ॥१॥

शून्य ! तु शृणु त्वं कथमथ ननु परमपिता ?
शून्य ! तु वद त्वं खलु कथं विधुः सविता ?
शून्यं गगनं हृदये शून्या धरणी ?
शून्यो देशः कालः, शून्या सरिता,
शून्यो दिवसः सुतरां शून्या रजनी,
गीतं शून्यं शून्या ज्योत्स्ना ललिता ॥२॥

सर्वं सान्द्रं शून्यं तरलं शून्यम्,
संज्ञा शून्या प्रतिमाशून्यस्तर्कः,
आरोहः शून्यः, शून्यस्त्ववरोहः
शून्या वादाः, रे शून्यो मधुपर्कः ॥३॥

अयि ! तत्प्रार्थयै कथं शून्यं कम् ?
अजिरे पीडाविकिरे कुर्यात्कः शम् ?
रोदिति रौति तु शून्यं, शून्ये प्रघणे
उपदिशति कथं शून्यं रे व्रणे व्रणे ॥५॥

●

## नगशिखरारूढ़ं तारुण्यम्

आयामास्तरुणाः, उत्साहस्तरुणः,
अभिलाषस्तरुणो नवस्वप्नास्तरुणाः,
वृद्धं गगनं पुनरपि तरुणं जातम्।
वसुधाविस्ताराः सञ्जातास्तरुणाः ॥१॥

काशस्तरुणो वेगस्तरुणश्चैषः,
तर्कस्तरुणस्तरुणः संझारावः,
आरोहस्तरुणः सकलं गीतं च,
आशोन्मानं तरुणं, तरुणो रागः॥२॥

पुनरपि जन्मनि खलु कायाकल्पान्ते
बहुप्रथितं राष्ट्रं शैशवसंप्राप्तम्,
अस्मिन् परिपालनपोषणसंयाने
यात्राशिशुतावत्मैंव जनावाप्तम् ॥३॥

स्वातन्त्र्यजबाल्ये चाक्रोशस्तरुणः
क्षोभोऽपि च तरुणो विध्वसास्तरुणः,
रचनात्मककार्यं सर्वं खलु तरुणम्,
तारुण्योन्मेषे बहुप्रश्नास्तरुणाः ॥४॥

पश्यन्तु युवानः, लिङ्गे नहि भेदः,
सर्वं तारुण्यं नगशिखरारूढ़म्,
किन्तु च मेदुरमुदिरे परितोगूढम्,
आन्दोलननिशि किं कर्तव्यविमूढम् ॥५॥

ऊहापोहो नयने नयने स्थविरः
तेषां संमतिभावे जीर्णः शीर्णः,
तत्किं चलनं, प्रगतिः, किं गन्तव्यम् ?
रोषे निखिलः पन्थाः कण्टककीर्णः ॥६॥

सुहृदः ! शृणुयुः ! वो मध्ये रविरेषः
कोलाहलप्रघणे ननुभुवनभ्राता,
उच्छलवेलोपरि कुमुदानां बन्धुः
स्यान्मूले धाता, स्याच्चूले त्राता ॥७॥

•

## भाषणभिषग्रत्नाय

दिवसे मञ्चे मञ्चे देशे देशे
नेतः ! यत्भाषणममृतं सुखदत्तम
बहुजनमङ्गलकरणे श्रवणे श्रवणे
कर्णपरम्परया प्रसरति तदमत्तम् ॥१॥

स्तौति च स्तौति च सुतरां विद्युत्स्थाणुः
चर्चति सुप्रशंसति चाकाशसुवाणी,
सुवपति सुवपति नित्यं दूरदर्शनम्
लाउडस्पीकरमाइकवक्त्रं ज्ञानि ॥२॥

तुङ्गे तुङ्गे प्रसरति विधुरविभवने
आकाशतरङ्गों बहु टङ्कति गगने
उडुवृन्दे मिषति च मिषति च तत्सर्वम्
प्रकटति स्वर्गिककाव्ये तगणे जगणे ॥३॥

पठति च पठति च नेता सर्वं रात्रौ
भाषणव्यस्ताय न खलु समयः स्तोकः
दिवसे शेतुं निशि पीतिं जागरणम्
"उन्निद्रो मत्तः" त्विति प्रथयति लोकः ॥४॥

●

## कज्जलधमनम्

राकारचिते हिमकरहृदये कथमथ चित्रं कज्जलधमनम्

स्वप्नः पृच्छति चन्दनगन्धम्
कुत्र च प्रतिमा कुत्र च रूपम् ?
अक्षतनिकरे कीर्णा पूजा
गगने मिहिका-कीर्णं धूपम् ।

मधुवनमुकुरे सुरभेः निर्मोकेरे कुसुमच्छायारणनम् ।
राकारचिते हिमकरहृदये कथमथ चित्रं कज्जलधमनम् ॥१॥

उर्मिलसंज्ञा प्रस्तरप्राणान्
सिन्धुविवर्तात् रहसि जहार,
स्रुतिरेषा मधुरस्मृतिरेषा
ज्योतिर्भूता दृशि च ततार ।

मरुसंपृक्ते चन्दति चन्दति खल्वेषा मधुपवनस्फुरणम् ।
राकादिवसे हिमकरहृदये कथमथ चित्रं कज्जालधमनम् ॥ २॥

संप्रति हृयाकाशतरङ्गः,
अङ्गे चाङ्गे जीवित श्वासः,
उद्वेलनकणिकास्वपि तरलो
रक्ताभिसरणलोहितहासः ।

प्राणैश्च विना जीवति बज्रं निशिगन्धागीतीनां शरणम् ।
राका दिवसे हिमकरहृदये कथमथ चित्रं कज्जलधमनम् ।

●

## कस्मिन् जाले ?

किं रचयसि वह्ने ! कवितां रे ?
व्युषसि न शाद्वलमिहिकाशब्दान्,
दिनकरहृदयाद् गायसि हरितम् !
प्रथयसि रक्ताभिसरणरागे
हिमकरप्रश्नं कुसुमैर्मथितम् ?
उल्कादोलायां क्षिपसि कथं गगनाकुलतां निः स्वनितां रे !
किं रचयसि वह्ने ! कवितां रे ॥१॥

ऊर्मिविपञ्चीं धृत्वा जलधौ
ज्वलयसि रहसि च रसगाम्भीर्यम्
गन्धवहानां मस्तारूढः
व्यथयसि नैमिषजीवन शीर्षम्
धूमैर्निगडित ! धावसि गच्छसि मलयवने यामां छलितां रे !
किं रचयसि वह्ने ! कवितां रे !॥२॥

रूपे दृप्ता परमसमिद्धा
राकापदवी तारकप्रीतिः,
त्वं नवनीते प्रावणि काष्ठे
वाष्पे विलुलितसंसृति रीतिः
तिमिराञ्जितकमले खलु रथयसि स्वप्नाविलतां मधुवलितां रे !
किं रचयसि वह्ने ! कवितां रे !

●

## उपवन जिज्ञासा

इत्थं ह्युपवनजिज्ञासा खलु सुमभूगोले देशे देशे
वृक्षाणां लतिकानां ह्रस्वाः
दीर्घा वा विपुला वा छायाः
युद्धयन्ति न रुचिभवने प्रघणे
तत्र न काश्चिच्छलना मायाः
न्यूनत्वमपूर्णत्वं तासां सत्तायां काले परिवेशे।
युद्धयन्ति न युद्धयिन्त च सर्वाः बह्वपचय उपचय उन्मेषे।
इत्थं ह्युपवनजिज्ञासा खलु सुमभूगोले देशे देशे ॥१॥

तत् कथमथ भूमौ सिन्धौ वा
दिनकरहिमकरतारकजटिते
पवनानां सौरभसाम्राज्ये
आकाशे स्वर्णरजतघटिते
शाश्वतसच्चित्परिनिष्ठायाः युद्धयति छाया शङ्कालेशे,
सिन्धुभ्रमरको विन्दुविवर्तः कण्डूतिः मस्तिष्के केशे।
इत्थं ह्युपवनजिज्ञासा खलु सुमभूगोले देशे देशे ॥२॥

इत्थं चिन्तनशीलं शून्यम्
चिन्तनव्यथितं वातावरणम्
परिपृच्छत्युद्वेलितझञ्झा
पृच्छति शतचैतन्याहरणम्।
कोणे कोणे का ध्वंसनवार्ता वद निर्माणनिवेशे?
याहि याहि त्वं कठिनतमिस्रे! विरम न बहु मिथ्याव्यपदेशे।
इत्थं ह्युपवनजिज्ञासा खलु सुमभूगोले देशे देशे ॥३॥

●

## पदद्वयेन किम्

पायं पायं नित्यं रक्तम्
प्रत्यूषः खलु पृथुलोजातः
शोषणप्रकृतिः श्यामः सन्धिः
अतिरक्तां पीवरतां यातः ॥१॥

अद्यैकस्मिन् चरणे तु ग्रहाः
अन्यस्मिन् बद्धा रे धरणी,
तत्का यात्रा ? किं गन्तव्यम् ?
दिवसे नृत्यति गर्जति रजनी ॥२॥

## हिमीभूतवात्याचक्रम्

न हि वद पाटलहिमसंघात !
किं वसतिस्ते बुद्बुदहृदये
मस्तिष्कमधुरकान्तारे वा
सिन्धोरुच्छ्वासाप्लावे वा
विहरसि मुक्ता संसारे वा
अथवा प्रणयोपनिवेशे वद वद देशातिक्रमणे जात !
न हि वद पाटलहिमसंघात ! ॥१॥

मौनं गर्जसि नृत्यसि तूष्णीम्
धुवसि च पाषाणं गिरिशिखरम्
निधुवसि गगनं सकलनां ध्रुवताम्
कृत्स्नं तुङ्गं ताराविकिरम् ।
मांसल ? पेशल ! त्वं परिनिष्ठित ? अद्भुतहिम ! सुन्दर ! अवदात !
नहि वद पाटलहिम संघात ! ॥२॥

चपला किं कुरुते पैशुन्यम् ?
तव ज्वालरचितनयनविरामः
तुदति च मधुकरस्वप्नं प्रश्नम्
अयि ते परमतमिस्रप्रणामः ।
किं वञ्चयसे व्यथयसि कुसुमं तरुमुद्धतयौवनप्रणिपात !
नहि वद पाटलहिम संघात ! ॥३॥

आशपुञ्जे खेलसि कुञ्जे
अतिमादकपुलकोद्गमनिवहे,
क्षिपसि परागं धूलिं लोष्टम्
धैर्ये चारुप्रतीक्षाप्रवहे ।
परिचिनुषे कौशेय-प्रभञ्जन ! शृणु परिचितपविसंहतजात !
नहि वद पाटलहिम संघात ! ॥४॥

●

## विकसति मौनं....

विकसति मौनं संकुचति च रावः ॥१॥

हरितं हरितं नृत्यति बहु पीताम्बर इच्छाशावः ॥२॥

स्मेरः पवनोधमति च मधु हृदयवने नीलिमरक्तम् ॥३॥

अनुसर ! मा कटुताकारण ! त्वं संप्रेषणमभिव्यक्तम् ॥४॥

अन्यस्मिन्नजिरे पठति च अनुभूतिश्रवण व्यतिरेकः ॥५॥

सौन्दर्यं विपदाकारणमपि इति नैष च ह्युत्सेकः ॥६॥

स्वप्नायत इह मसिशैलः, शब्दं संदशति च चपला ॥७॥

कुसुमे कुसुमे खलु तरला अर्थाचितराशाविकला ॥८॥

विन्दौ विन्दौ याचत इह किं किं संघर्षनिवेशः ॥९॥

सागरशङ्कासीमां सीव्यति खलु वीचेरादेशः ॥१०॥

पुस्तकामुखे ननु हस्ताक्षरनिगडित एष अभावः ॥११॥

विकसति मौनं सकुचति च रावः ।

## मनसीयं पांसुलता

इन्द्रधनुःशतरञ्जे वारिद ! ते स्फुरणं क्लान्तं जातम् ।
बिन्दौ बिन्दौ मधुरकल्पना झटिति लेढि च हिमवातम् ॥१॥

देशे देशे भ्रमणैर्लुप्तं लक्ष्यं नष्टं चैतन्यम्, ।
आसारे नष्टं ते सत्ता, विहसति पथि पथि वैषम्यम् ॥२॥

सामुद्रिकनन्दन ! रसमुखरितनीलकलेवर चन्दन !
आशा का तुङ्गत्वविमर्शे ? शतशतप्रणतीनां स्यन्दन ! ॥३॥

परिणतसमये कज्जलनिवहं क्षिपति च रजनी सातत्यम् ।
द्वारे द्वारे खद्योताः खलु कुर्वन्ति च ते पैशुन्यम् ॥४॥

जीवनसम्बल ! संसृतिजीवन ! संप्रति निशि किं करणीयम् ?
शतशत तारकनयनैः पश्य च साधो ! कुत्र तु चलनीयम् ? ॥५॥

•

## विकलमविकलम्

घर्मैः स्यूतः शैलः शैलः
एकत्वे पीताम्बरत्नासे,
एवं स्यूता सरिता सरिता
अटवीद्रोणीलोहित हासे ॥१॥

एवं चामृतपुलकितपाशे
एकत्वे स्यूता आयामाः
इत्थं स्यूता सकलाः सीमाः
उच्चावच आशीस्तुप्रणामाः ॥२॥

हरितानां दिनपार्थक्यानाम्
छायायामुटजं गृहसौधम्,
विश्रामं कुर्वद्भिः धूपैः
नहि स्यूतं स्वर्णपरेऽमोघम् ॥३॥

वसुधायां ननु वसंतेर्वसतेः
अविकलसुन्दरस्वणीकरणम्
नश्यति शाश्वतसूर्याकाक्ष्ङ्क,
परहसति तु मदवर्गीकरम् ॥४॥

## पर्यायाणां मधुरीकरम्

आशाप्रत्याशानिर्वहणम्
सन्धिः सामञ्जस्यम्
एते जीवितपर्यायाः—
शूलानामपि मधुरीकरणम् ।
आरोहो मधुरः,
अवरोहो मधुरः
आस्वादनकुशलस्य च सर्वं मधुरम् ।
कालकरे मग्नः
रविराज्ये काञ्चनकरवालः ।
तस्य करे रम्या निशि
राजतवीणावंशी ।
यथा यथा वादयते वादक एषः,
यथा यथा विधरति साधक एषः,
सोपाने सोपाने संवेदनशेषे
भावनदेशे परिभावनप्रांशौ
अनुकूलं मधुरं प्रतिकूलंमधुरम् ।
शिरसा विधृतं सर्वं मधुरम् ।
रसना विधृतं तिक्तं बहुलम् ।



## याहिरे ! याहिरे ! चन्द्रिके !

प्राङ्गणे वर्धते कामना वल्लरी,
राजतं राजतं भाषते यौवनम्,
शून्यता याचते गीतिकांशर्वरीम्,
शीर्षके शीर्षके शोभते चन्दनम् ॥१॥

कल्पना डीयते यामिनीकेतनैः
राजती वंशिका रौतिरे ! निःस्वनम्,
संपटे संपुटे माधुरीचित्रणम् ।
प्रस्तरे प्रस्तरे फेनिलं स्पन्दनम् ॥२॥

निलिमारूपके स्वप्निलं नर्तनम्,
दर्पणे दर्पणे दृप्तादंशनम्,
यूथिकस्रग्वरैः तुङ्गतापुलकिता,
तरुतले तरुतले शून्यतास्यन्दनम् ॥३॥

चिन्तने चिन्तने मादनं दर्शनम्
मार्गंषसेवते सेवतीकण्टमक,
याहि रे ! याहिरे ! शिञ्जनीचन्द्रिके ।
लोचने लोचने कज्ञलं क्रन्दनम् ॥४॥

चन्द्रमास्तारकाः प्रेयसी प्रेरणा
कुर्वते रे सुधासिञ्चितं वञ्चनम्
उर्मिलामेखलारागिणीरञ्जनम्,
केवलं पिच्छिलाभूमिका मञ्चनम् ॥५॥

●

## इति शम्

तामसैः कर्षणैः भ्रान्तता भाति रे !
राजसै वर्त्मभिः रागिणी याति रे ?
लोचने लोचने भास्वरभ्रान्त रे !
पिच्छिले लुण्ठिता गन्धिनी वाति रे !

सेकते जाह्नवी केवलं प्रश्नता,
गह्वरे जीवनं याचते तुङ्गता,
गीतिकां याचते वंशिकाच्छिद्रता,
अश्मके रौति रे शब्दिकीभग्नता ॥२॥

सात्विकीशैलता शालिनीशाङ्करी !
अन्तिमं लक्ष्यकं स्यात्कथं संसृतौ ?
गुणविभा निष्प्रभा व्योमतारोहणे
सा तुरीये विमाने वृथा निर्वृतौ ॥३॥

तामसं शिञ्जनं केवलं रोधनम्,
राजसं चन्दनं केवलं मोहनम्.
सात्विकं वन्दनं स्वस्तिकं स्पन्दनम्,
पारगं चूलकं शान्तिदं शोधनम् ॥४॥



## कोलाहलो वा मानुषो वा

कोलाहलप्रतिमानां मुण्डं चूर्णम्,
वक्षोऽस्थीनां खण्डं खण्डं जातम्,
हस्तं भग्नं, वर्त्मनि चरणं भग्नम्,
अङ्गं चाङ्गं तु विदीर्णं सञ्जातम् ॥१॥

ध्वनिप्रतिध्वनिविग्रहसंकुलविस्ताराः
दिवसं नक्तं प्रस्तरभित्तौ शीर्णाः,
शब्दानां पेशलमांशलविन्यासाः
लोहितरक्तं मज्जान्यासाः कीर्णाः ॥२॥

कोलाहल रे ! उटजे सौधे किं त्वम् ?
गिरिसरिवनभौगोलिकसीमाग्रथिते,
चन्दनवन्दनक्रन्दनस्यन्दननिवहे
मानुष एषच पविस्वरविकिरणव्यथिते ॥३॥



## भविष्यत्

न मार्गे न तुङ्गे न निम्ने न कोणे,
न ग्रामे न पौरे न सौधे निकेते,
न शैले, न द्रोण्यां, न देशे विदेशे
न माने, विमाने, न मञ्चे प्रकेते ॥१॥

न सूर्ये न चन्द्रे न तारावितान
न शब्दे न चार्थे, न चेष्टाप्रताने
न सन्धौ न रात्रेः सुपार्श्वे
न शङ्खे, न तूर्ये, न वंशे, न ध्याने ॥२॥

न कर्षे विकर्षे न हासे नवाष्पे
न योगे न भोगे न तर्षे न पाने ।
न मन्त्रे न यन्त्रे, न बुद्धौ, न जाड्ये
न बन्धे न मोक्षे न तर्के न ज्ञाने ॥३॥

न प्रश्ने, न स्वप्ने, न नाट्ये न लास्ये,
न दम्भे, न तारे न ज्वारे न भ्रान्तौ,
न मिष्टे न चाम्ले न रोषे न क्षोभे
भविष्यत् सुसार्थे चरित्रे सुशान्तौ ॥४॥

●

## परिप्राश्निकम्

प्रयासे व्यथा का ? विकल्पे कथा का ?
दिनाङ्के प्रकाशे तमिस्राप्रथा का ?
सुशब्दे प्रयुक्ते कुभाषा वृथा का ?
सुतर्के प्रपन्ने वितण्डा-विभाका ? १

सुमार्गे प्रयाणे कथं किं भयं वा ?
समाधौ सुदृष्टे तु शङ्काशिलाका ?
सुलक्ष्ये सुप्राप्ते च किं स्यात् सुयात्रा ?
किरीटे च किं स्यात् तु धूलेः शलाका ? २

सुवेगे विरामश्च किं स्याद् विनेता
सुगेहे सुशान्तौ च किं स्याद् विधानम् ?
अमित्रे प्रयाते च किं स्यात् तु वैरम् ?
अरोगे सुशक्तौ च किं स्यान् निदानम् ? ३

रथानां विलोपे च किं स्यात् सुरथ्या ?
द्रुमाणां विलोपे च किं स्यादरण्यम् ?
सुमानां विलोपे च किं स्यात् सुगन्धः ?
सुसत्ताविलोपे च किं स्याद् वरेण्यम् ॥४॥

## सापेक्ष्यसिद्धिः

न योगस्य सिद्धिस्तु भोगैर्विना रे !
निदाघप्रसिद्धिः वसन्ताभियाता !
न वाष्पस्य सिद्धिस्तु हासैर्विनारे !
सुशिक्षा तु शूले प्रसूनानुयाता ! १

सदा वह्निनोक्तस्तु शैत्यस्य रागः,
सदा तुङ्गतोक्तस्तु निम्नस्यभावः,
सदा दीर्घताङ्के हि सूक्ष्मस्य मात्राः,
सदा निः स्वने मञ्जु शिङ्ते विरावः ॥२॥

दिनं किं समृद्धं तमिस्रां विनारे !
न वैषम्यबोधस्तु साम्यैर्विना रे ?
न सेतुः कदाचित् नदीभिर्विनारे !
न रौद्रस्य घोषस्तु शान्तैर्विनारे ॥३॥

## ग्रन्थिः

ग्रन्थेर्नयनं मधुरसुधाशयनम्
अधरे स्वार्गिकवहुमसृण प्रात :
पाल्यां पाल्या विकसति का ज्योत्स्ना ?
पाटलवर्णे कुसुमाकर आप्तः ॥१॥

नवसुषमायामे कलिकौशेये
सूक्ष्मे विन्दौ शर्वयनियनम्,
एकस्मिन् कनोनिकायां कृत्स्नम्
रसज्योतिस्ताराणामाकलनम् ॥२॥

ग्रन्थौ शुभशक्तिसमाहितगीतम्
ग्रन्थौ शब्दश्चार्थः शतकोषः
वेदप्रमाकुलसंसारभ्रान्तिः
स्मितसिक्ताचेष्टायाः संपोषः ॥३॥

हृदये मस्तिष्के क्रान्तेर्वपनम्
वृन्ते मुकुलितमधुवनजिज्ञासा,
वृत्तानां खलु मूके ऽर्धविसर्गे
कलिता रणिता बलिता प्रत्याश ॥४॥

अभिमन्त्रितसंमोहनरसमुक्ता
अलिनीमौने वग्मित्वे वचने,
कोटिविरामाणां कविताप्रणवः
व्यक्तं किं कथं राजिकारचने ॥५॥

एष च कस्तनुसमवायो ग्रन्थिः ?
छबिपरमाणूनां किं च स्वरूपम् ?
किं जिष्णोः नन्दनकाननतिलकम् ?
लक्ष्म्याः भाले गोरोचन शूकम् ॥६॥

●

## झञ्झाझङ्कारः

शून्यं पीतं रक्तं हरितं कुसुमम्
शून्यं नक्षत्रविलोडितग्रहक्वणितम्,
शून्यं परिरम्भाक्रान्तं नयनपथे
शून्यं दिवसैः निशिभिर्गतिनिर्मथितम् ॥१॥

शून्यं हसति च सौधे गायत्युटजे,
शून्यं सरिता, शून्यं शैलः शिखरम्,
शून्यं सैकतप्रभुता वनवनविभुता,
शून्यं सागरप्रतिमानीलिमविकिरम् ॥२॥

शून्ये फलतिच शतझञ्झा-प्रत्याशा,
शून्ये स्फीतः शम्पाशाश्तलोकः.
शून्ये समवायो वादयते वीणाम् ।
शून्ये गणयति सत्ताः जगदालोकः ॥३।

शन्यं नहि तीर्णं याने च विमाने
शून्यं बिम्बं खलु प्रतिबिम्बं दृष्टेः,
शून्यं षड्ऋतुचक्रे मधुकरवेशः,
शून्यं परिनिष्ठितरचना ननुसृष्टेः ॥४॥

शून्यं गर्जति धूमे वारिदविपिने,
आसारे शून्यं वर्षति च त्रिकालम्,
शून्यं कर्षति नूत्नं प्रत्नं वितनम्,
शून्यं ब्रह्माण्डस्वरूपं वाग्जालम् ॥५।

शून्यं भाषापारे जगविस्तारे,
शून्यं सकलसपर्या सकला ऊर्जाः,
शून्यं मुक्तिः भुक्तिः ज्ञानं ज्ञेयम्
शून्यं ज्ञाता तर्कः विकलाश्चर्चाः ॥६॥

## इयं नकारात्मकता

मधुरै स्मितैः स्मितैः प्राङ्गणव्योष
शम्पेयं ब्रह्माण्डहृदय उत्कम्पः,
शबलादृष्टस्य च नामविहीनोऽयम्
मिहिकायां गीते कुसुमितभूकम्पः ॥१॥

पाषाणानां द्रवितमधूला शिञ्जा,
का जानीते का चित्रा प्रतिमा,
वाणादपि तीक्ष्णा संवेधनचेष्टा,
सिन्धोः राकावीचीमसृणा म्रदिमा ॥२॥

अद्भुतहिमजाता ज्वालामुखमूर्तिः
दहतितु शीतैः शीतैः मलयजश्वासैः,
रौति च शिराशिरायां धमनीगूढे,
ध्वान्ते बध्नाति कथं ज्योत्स्ना पाशे ॥३॥

उन्मिषति च रक्तं, मधु हसति च हरितम्
नहि जाने प्रश्ने स्वप्ने जागरणे
खेलति च कथं चञ्चलपाटलप्रभुता
आरामे च नत्रानां, सुमसंप्लवने ॥४॥

## गणिते स्खलिते

भाषा विधुरा वर्णं विधुरम्,
शब्दो विधुरो वाक्यं विधुरम् ।
कविता विधुरा गीतं विधुरम्,
गणिते स्खलिते निखिलं विधुरम् ॥१॥

विरहो विधुरो योगोविधुरः,
हसितं विधुरं, चलितं विधुरम् ।
प्रणतिर्विधुरा, आशीः विधुरम्,
गणिते स्खलिते निखिलं विधुरम् ॥२॥

कुसुमं विधुरं कलिका विधुरा,
सुरभिर्विधुरो मकुलं विधुरम् ।
राकाविधुरा ज्योत्स्नाविधुरा,
गणिते स्खालिते निखिलं विधुरम् ॥३॥

दिवसं विधुरं ज्योतिर्विधुरम्,
गगनं विधुरं तिमिरं विधुरम् ।
वसुधा विधुरा पवनोविधुरः
गणिते स्खलिते निखिलं विधुरम् ॥४॥

प्रश्नो विधुरो भणितं विधुरम्,
स्वप्नो विधुरो दृष्टं विधुरम्, ।
क्रीडा विधुरा व्रीडा विधुरा,
गणिते स्खलिते निखिलं विधुरम् ॥५॥

निकटं विधुरं दूरं विधुरम्,
स्पर्शो विधुरः श्रवणं विधुरम्,
रसना विधुरा, घ्राणो विधुरः
गणिते स्खलिते निखिलं विधुरम् ॥६॥

हर्षो विधुरः पुलकं विधुरम्,
तर्को विधुरः शास्त्रं विधुरम्।
गणितं विधुरं सूत्रं विधुरम्,
गणिते स्खलिते निखिलं विधुरम् ॥७॥

आशाविधुरा याच्ञा विधुरा,
गर्वोविधुरो, विनतं विधुरम्।
धैर्यं विधुरं चेष्टा विधुरा,
गणिते स्खलिते निखिलं विधुरम् ॥८॥

## स्यात्कथं, किम् ?

वर्जनीयं कथं दर्पणे बिम्बितम् ?
चर्चनीयं कथं चन्द्रिकाचिन्तितम् ?
प्रेषणीयं कथं यामिनीहार्दिकम् ? १

रोधनीयं कथं वीचिका व्याहृतम् ?
लेपनीयं कथं चक्रवातव्रणम् ?
मन्थनीयः कथं कोरकैः प्रस्तरः ?
स्थापनीयं कथं चन्द्रके रे तृणम् ? २

गुम्फनीया हि किं प्रेयसीगीतिका ?—
कानने बन्दिनी-वेदनानूपुरैः,
कज्जलं सुन्दरं स्याद् विना लोचनम्
मोहिनी भूमिका स्याद् विना सत्यकैः । ३

तृप्तिदं स्याद्धि किं शून्यतालिङ्गने ?
हर्षणा स्याद्धि किं वह्निजा मालिका ?
भीतिजं स्याद्धि किं प्रेरणा-सम्बलम् ?
कण्टकी स्याद्धि किं पाटलीतालिका ? ४

●

## अद्भुतक्रीडनकम्, चित्रो ग्रन्थः

अयि ! विपुलविवक्षे वसुधे किमिदं ते क्रीडनम् ?
ऊर्मिविपिञ्च ब्रूहि च किं ते सलिल क्रीडनकम् ?
विलुलित वैश्वानर ! वद कथमथ पावकक्रीडनकम् ?
गगने पवने प्रश्नः किमिदं विग्रहक्रीडनकम् ? १

विंशतित्रिंशत्धातूनां संयुक्तः परिवारः
किरणैस्तिमिरैः स्फीतः सिन्धोश्चुल्लकसंसारः,
कस्याः सत्तायाः परिवर्तनरथप्रथिता मुद्रा ?
कश्चिन्मूर्तोऽयं सूक्ष्मत्वे ब्रह्माण्डप्रचारः ॥२॥

उपमाभवनं, सुषमाकोषः, खलुबुद्धेर्विपिनम्,
भञ्जनशीलं क्रीडनकं को ब्रह्माण्डस्यार्थः,
दैवीसंपत्तेर्भिक्षा राक्षसविभुताकाङ्क्षा !
कस्मिन् श्रेढीव्यवहारे चित्रः सन्ततसार्थः। ॥३॥

ईश्वरप्रतिमा, प्रकृतेः प्रथिमा स्याज्जीवनशिखरम् ?
शाश्वतसागरसंयाने बन्धक उपरतिपन्थः !
शान्तेः शमनं क्रान्तेः क्वणनं रे चिरजिज्ञासे !
पत्रे पत्रे पुटके पुटके पठनीयो ग्रन्थः ॥४॥

## श्रीफलेन किम् ?

शून्ये रक्षितमिव श्रीफलमेतत्
ब्रह्माण्डवने कस्मिन्नाधारे,
मोदकसन्निभमपि रुचिरं रुचिरम्,
प्राणानां जडताशतविस्तारे ॥१॥

कस्मिन् दर्पे फलितः सन्दर्भः
आसारे पङ्क्तौः मिहिकालेखे
अद्भुतभूतभविष्यत्साम्प्रतिके
चाक्षुषक्रतुकर्मंजययज्ञविशेषे ॥२॥

परम उदुम्बरफलिते मधुस्वदिते
जीवितकिरणानां शकलं शकलम्,
तिष्ठति खलु परिनिष्ठाप्रतिमानम्,
किन्तु कथं कथ्यं विकलं विकलम् ॥३॥

अत्र च भोगे वैभवचलचित्रम्,
किं काञ्चनकोलाहलकान्तारे,
तत्र च बहु रुदितं युद्धं, रोगः !
अतिदीने सैकतपारावारे ॥४॥

फलमास्वादितमेतद् सकलस्वरैः
व्यञ्जननिकरे किं हाहाकारः ?
रोषः संघर्षः वारंबारम्,
स्फुरति तु मृन्मयकलधौतविकारः ॥५॥

मुण्डितमुण्डं खलु वसुधाचित्रम्,
अस्य च वर्यः तूलीश्शृङ्गारः,
हित्वा "आदम-इव-सेबाख्यानम्"
त्यजनीयः शैतानः सच मारः ॥६॥

"बम बम" इति शब्दः शिवपूजायाम्
केवलमनुरागे ननु श्रवणीयः,
भोजनवस्त्रावासनुतो विष्णुः
मन्दिरनादे समरसवरणीयः ॥७॥

अवतर ! अवतर ! आक्रोशे क्षोभे
तिमिरव्रणे सद्यः दिवाभिषेक !
उपवनप्राणप्रतिष्ठे जने जने
द्वारे द्वारे विकस च सुमप्रमाप्रकेत ॥८॥

श्रीफलमेतन्मोदकमेतद्वै
अस्माकं मुण्डं सुपथा धरणी,
रक्ष्या रक्ष्या पूज्या चिरपूज्या
रविचन्द्रविराजितशाश्वततरणी ॥९॥

## अस्मिन्नक्षांशे अस्मिन् देशान्तरे

भ्रमिता धरणी, भ्रमितं गगनम्
भ्रमितः पवनो भ्रमितं चलनम्,
भ्रमितं सलिलं, भ्रमिता मिहिका,
भ्रमितः कान्तो भ्रमितं कलनम् ॥१॥

भ्रमितं दिवसं भ्रमिता रजनी
भ्रमितश्चन्द्रः, भ्रमितः सविता,
भ्रमिता द्वाभा, भ्रमिता सन्ध्या,
भ्रमितो रागो भ्रमिता कविता ॥२॥

भ्रमितःशब्दो भ्रमितस्तर्कः
भ्रमितं छन्दः भ्रमितं रचनम्,
भ्रमितं श्रवणं भ्रमितं रसनम्,
भ्रमितं नयनं भ्रमितं वचनम् ॥३॥

भ्रमितं भवनं भ्रमितो भावः
भ्रमिता यात्रा, भ्रमितः पन्थाः
भ्रमिता क्लान्तिः, भ्रमिता नवता
भ्रमितं पुटकं, भ्रमिता ग्रन्थाः ॥४॥

भ्रमिता सरिता, भ्रमितः शैलः,
भ्रनिता मरुता, भ्रमितं हरितम्,
भ्रमितो धूमो भ्रमितं ज्वलनम्,
भ्रमितं रिक्तं, भ्रमितं भरितम् ॥५॥

अमितं कुसुमं अमितं मुकुलम्,
अमिता कलिका अमिता मधुता,
अमितं कृष्णं अमितं शुक्लम्,
अमिता कृशता अमिता पृथुता ॥६॥

अमिता नगरी अमितो ग्रामः,
अमिता संख्या अमितः शेषः,
अमितं भाज्यं, अमिता लब्धिः,
अमितं पूर्णं अमितो लेशः ॥७॥

अमिता जगती अमितं सकलम्
अमितो मदनः अमितं दमनम्,
अमितो भोगो अमिता तृप्तिः,
अमितो देवो अमितो नमनम् ॥८॥

●

## बीजव्याहृतिः

का मे खलु करुणप्रतिष्ठा,<br>
वद मृन्मयकठिनरहस्ये<br>
कः स्फुरति हृदयसंवेगः<br>
उपवनरावे सुयशस्ये ॥१॥

श्वसनं नयने तु रुणद्धि च<br>
सर्वं परिहृतसुखवसनम्<br>
शर्करिले निग्रहतिमिरे<br>
वाष्पजले निर्दयत्रसनम् ॥२॥

अधरं रुद्धं कर्णं ह्यपि<br>
आशा छिन्ना क्व च चेष्टा,<br>
मूले नतचूले भ्रान्तिः,<br>
शान्तस्वरे क्रान्तिः प्रेष्ठा ॥३॥

काले विकसति च स्वभावः,<br>
बहुकण्टकनिकरे क्षोभः,<br>
तत्र च शतकुसुमाख्यानम्<br>
प्रणतः शूलपथे रोषः ॥४॥

नहि किं जानीते माली ?<br>
नहि किं जानीते पथिकः ?<br>
नहि किं जानीते सार्थः ?<br>
नहि किं जानीते रथिकः ॥५॥

एष च शाश्वत आक्रोशः,<br>
अर्धनिशीथे करुणविहागः,<br>
कथनैः किं, व्यर्थस्तर्कः ?<br>
वितथा दिवसे शोणितरागः ? ॥६॥

●

## एवं नित्यम्

नीला शङ्का भासितगगनम्,
शुक्ला शङ्का मसृणा मिहिका,
शङ्कावायुः प्रतिध्वनिवचनम्,
हरिताशङ्का सीमाशिविका ॥१॥

आलोको मरुताजलशङ्का,
मधुरा तिक्ता शङ्का तर्के,
शयने शङ्कानुवदति सत्यम्,
रज्जोःशङ्का शेते सर्पे ॥२॥

चन्द्रे दृष्टं सुन्दरवक्त्रम्,
छायायां किं वदति च प्रेतः ?
उल्का शङ्का सरितातीरे,
मुञ्चति वाष्पं शङ्कितदेशः ॥३॥

गणितं गायति गीतं हृदये,
शङ्का रोदिति नितरां नयने,
सत्यं रचयति जगतीं शून्ये,
अमृतं, जिष्णोः शस्त्रं प्रघणे ॥४॥

## खण्डशः

छिन्नं मुण्डं मुकुरे मुकुरे,
कज्जलविपिने तरले स्वप्ने,
ऊर्मिलध्वनिप्रतिध्वनिकासारे
कटुमधु प्रश्नोत्तरवपने ॥१॥

"आसीदस्तिभविष्यति"–शैले
द्रवितेकलधाराभयवहने
पश्यत्यस्मित्वं तरणाख्या
पथि पथि शाश्वतमरकतस्रवणे ॥२॥

कालस्य च खलु त्रुटिता दन्ताः
कीर्णा गीतस्वरसंग्रहणे,
तुङ्गे तुङ्गे कलिजागरणे
अत्रासंभव–मधुताप्रघणे ॥३॥

आयासानां नगशिखराणि
उच्छलताया गुहाविदेहाः,
अगणितविपुला पर्वतशकलाः
प्लावनमूर्ता हृदयप्रदेशाः ॥४॥

मुखरितकालविरञ्जनस्वर्णात्
निः स्वनकालप्रेषितमसिते ?
कालप्रचारितशुक्लत्वमते

मौनं भज भज ? शृणु रे कविते ॥४॥
आरोहणपथ ! पृथुनीलशिला: ?
शृणुतः शृणुतः ङ्क्रमणे पविते ॥५॥

## त्रिप्रमा

मृत्तिकागुञ्जनं पादपे पादपे,
बिम्बनं दृश्यते यूथिकाफुल्लके,
दर्पणो राजते बुद्बुदे बुद्बुदे
स्पन्दनं याति रे वाचिकाचुल्लके ॥१॥

भूतजाभूमिकाक्षार रे ! क्षार रे ?
कज्जलस्यन्दने कृत्स्नतालुप्त रे ?
मार्गणं मारुतं जाङ्गलं याचते
गुप्त रे ! भुक्त रे ! मुक्त रे ! सुप्त रे ॥२॥

वह्निजे कुङ्कुमे धूमजे फेनके
विन्दुतासिन्धुताजीवनं जीवति
चर्पटैः चर्पटैः चित्रितं कन्थकम्
क्षीरिणीसूचिका सूत्रकैः सीव्यति ॥३॥

काञ्चनक्वाथने यामिनी तीर्यते,
उल्कुषीन्लेपने चन्दनं शीर्यते,
कम्पने कम्पने पर्वतो दीर्यते,
नीलिमे पङ्कजे व्योमकं कीर्यते ॥४॥

क्षैतिजी तूलिका लेखितैः शीर्षकैः
कोटरे कोटरे ग्रन्थिता पुष्पिका,
कोषिकाबन्धनैः राजिकामन्थने
ह्रस्वताक्षोभने काशते चूलिका ॥५॥

शाद्वले शाद्वले सैकते सैकते
ऐहि रे ! ऐहि रे ! कुण्डलीव्यापृते ?
गीतिजे भीतिजे पक्ष्मले संवृते
प्राङ्गणे रोधने वीथिकानिर्वृते !६॥



## हसन्तोविरामाः

वाष्पाणां व्यापृतयः, वाष्पाणां व्याहृतयः
ग्रन्थौ तन्वन्ति त्रियामां, तन्वन्ति च दिवसम्,
स्वप्ना जीवन्ति च काञ्चनचषके रजतव्रणे,
सान्त्वनमरकतलेपतमसि कुरु काव्यं सरसम् ॥१॥

वीचीपत्रे फेनकमुकुले बद्धा कज्जलपदवी,
नहि प्रचरति भुवि मलयजवाक्यं याने याने,
शब्दानामान्दोलनविपिने जाता क्रान्तिः,
अर्थानामास्मित्वं प्रलपति गाने गाने ॥२॥

उपमाधूमकषायितविकला वक्तुमशक्ता,
उत्प्रेक्षायास्तुघृणा चायामानां श्वित्रे,
नितरां चोपालभते शिखरे क्षुब्धः श्लेषः,
रागलयौ हिमपर्वतदलितौ वंशोमित्रे ॥३॥

आवर्तविवर्ते पातञ्जलिपुटकेच्छलिते
वाणीविधुरा वधिरा श्चेष्टातर्कविरामाः,
चित्राधारे, दीपाधारे, रसव्यापारे
तिष्ठन्ति हसन्तो नैराश्यप्रदत्तप्रणामाः ॥४॥

●

## वह्निः शरशय्यामधिशेते

इच्छा स्मेरा स्वप्नः स्मेरः,
विहसति कुसुमं विहसति शाखा,
तीरे सत्यं मुञ्चति वाष्पम्,
शिखरे किञ्चित् कथयति भाषा ॥१॥

रोदिति कथ्यं प्रियसोपाने,
व्यथयति रजनी मुखराश्लेषे,
तरु-ग्रन्थे शिङ्क्ते च तुषारः,
वह्निः शरशय्यामधिशेते ॥२॥

मुकुलपणेन च दीव्यति मौनम्,
दूरत्वं निधुवति नेपथ्यम्,
गगनाह्वाने वधिरा वसुधा,
संज्ञाकण्टकपिहितं तथ्यम् ॥३॥

बालिशता भुवि चुम्बति चन्द्रम्,
अद्भुतशूलः शशकविषाणे
वादयते चित्रतरं तूर्यम्,
स्फुरति च हृदयं प्रस्तरशाणे ॥४॥

रक्तैः कपिशाः वंशोप्राणाः,
रन्ध्रे रन्ध्रे किं च निवेद्यम् ?
दीपासन्ने तिमिरकिरीटे
कथमथ सुखयति वद संवेद्यम् ॥५॥

●

## पञ्चकपैशुन्ये कृकलासः

हरिता वाञ्छा पीतस्तर्कः
वातुलदन्तुरलोहितलोभः,
उच्चैः प्रसृतं नीलिमधैर्यम्
कान्तारे किञ्जल्कितक्रोधः ॥१॥

झञ्झागुप्ते विन्दौ घ्राणः,
मुकुले मुकुले ह्रस्वे नयने,
अद्भुतरसना पत्रे पत्रे
कुसुमेकुसुमे चित्रे श्रवणे ॥२॥

शिरसः प्रेङ्खणपांसुलल्लासे
इङ्गितमेदुरवीप्सारचनम्,
रश्मौ रश्मौ पुच्छलबन्धः,
रावे मौनं प्रस्तरबचनम् ॥३॥

दीर्घतमायां चिरद्रुमतायाम्
शतलतिकासन्तानप्रताने,
कज्जलपाटलकुन्दप्रचलनम्
आरोहणभावश्च विमाने ॥४॥

तरुणप्रघणे जीर्णसुभित्तौ
जीर्णप्रभृतौ बहुगतिवासः,
शतदलसरणौ को ऽयं को ऽयम्
पञ्चकपैशुन्ये कृकलासः ॥५॥

## अंशानां सहमतिः

गन्धनैर्वर्णकैः सत्यकैर्वृन्तकैः
फुल्लकैरिङ्गितैरिङ्गितैः द्योतते,
तर्कनापूजिताराधिता कल्पना,
बन्दनं चन्दनं मन्थनं जानते ॥१॥

आर्जवे वक्रतारोधने मार्गणे
बिम्बने दीपने दर्पणे मूलके,
चेष्टिते शब्दिते निःस्वने गोपने
किं कथंकाशते गीतिकाचूलके ।।२।।

आह्निकं चम्पकं नन्दने कानने
पोषितं वर्धितं प्राङ्गणे शोभितम्,
शर्वरीमाधुरीं कौमुदीमन्त्रणम्
किं कथं कत्थते सौरभैर्बोधितम् ॥३॥

सागरे सागरे विस्मृता दृश्यते
अङ्कयोगस्य शेषास्पदा पूर्णता,
सर्गजे वर्गजे वीथिकावर्तने
चिन्त्यते, भाष्यते व्यापृता घूर्णता ।।४।।

## प्राणस्मेराकथा

अर्पणं दर्पणे क्रीडनं क्रीडने
कज्जलाच् चन्द्रिकारूपणं गोपने,
कोरके कोरके प्राणस्मेराकथा,
दृष्टिद्राक्षास्रुतिः स्वप्नजे रोपणे ! १

हर्षिणीतोषणे बन्धने मोक्षिणी,
वंशिके ! वादने पल्लवैश्चुम्बिता,
त्वं हि री व्योमके चञ्चलामालिके,
फुल्लकैः सौरभैः गीतिकागुम्फिता ॥२॥

भास्कराशिञ्जिता स्वप्नप्रश्नावली,
उत्तरे निःस्वना शब्दिता नाटिका,
एहि रे जीवनीमेदुरे भूमिके
त्वं स्मृतेः पोषिता कल्पनावाटिका ॥३॥

ध्वान्तसंबोधने तारकामञ्जरी,
अञ्जनं त्वं दिशानीलिमालोचने,
भ्रान्तता-प्राङ्गणे शुद्धतावल्लरी,
भाषसे कां कथां भालगोरोचने ॥४॥

सुन्दरी ह्योषधिः शैलमूर्च्छाकृते,
शीर्षके शीर्षके भावकेतोः प्रमा,
नैमिषे वेपने त्वं हि स्याः स्थैर्यदा,
किञ्च विस्फूर्जथोः क्रान्तिसेतोः शमा ॥५॥

●

## धूमकषायित परिपाटी

उपरतिरेषा शाश्वतमरकतप्रथिमा,
तारकतिलकैः जन्मोप्ता जिज्ञासा,
अयुतनियुतप्रश्नानां ज्योतीरावे
धृतिचरमा द्योतत उत्तरप्रत्याशा ॥१॥

दृष्टेर्ग्रन्थौ ग्रन्थौ प्रत्नरहस्ये
विधुकुण्ठा-स्मेरा दमयन्ती दोषा,
रोमन्थप्रचारे रसफेनकशूले
कुङ्कुमप्रमया स्वप्निल-ज्योत्स्ना शोषा ॥२॥

कज्जलपटले मृग्यति दीपकमानम्
धूमकषायितनीराजनपरिपाटी,
इह गर्जति तर्जति इन्द्रधनुः पारे
सिन्धोः वीच्यां जीवितरसपरिभाषी ॥३॥

विन्दुः कुरुते सागरमानोन्मानम्,
कोटिविसर्गवनं प्रणयति पृथुग्रन्थम्,
अपराजितपृच्छा नृत्यति मसिरेखा
द्यौः कर्षेत् कथमेकलशुष्कं वृन्तम् ? ४

●

## याहि रे ! एहि रे ! अदृष्ट !

[ रागधनाश्रीः ]

मित्रप्रवर ! कस्त्वं परिपन्थी ? १

विपिने विपिने प्रचरसि स्वैरं, तारावसुधाग्रन्थी ॥२॥

अमृतव्रणे त्वीश्वरतावरणे शशलाञ्छन प्रघणे ॥३॥

विषधर ! चामृतसिद्धे ! व्याहर कस्त्वं ध्वान्ते भ्रमणे ? ४

गायसि चिरकर्मठतागीतं मादनतस्करदेव !५॥

पानीये खलु ज्वालाकरणे सुपटुः हे अधिदेव ! ६

किं परिहससि च गणिते सूत्रं त्वं बहुशोनिष्णातः ॥७॥

क्रोधनशान्तः लञ्छितवाञ्छित ! त्वं प्रथितो ह्यवदातः ॥८॥

भुवने रचयसि जिष्णोर्जाले इन्द्रधनुः कलसेतुम् ॥९॥

मूको वधिरो युगपत् तनुसे त्वं जयपरिभवकेतुम् ॥१०॥

एकं चक्रं जीवितशकटे त्वं गुप्तं रोमन्थि ? ११

मित्र-प्रवर ! कस्त्वं परिपन्थी ।

## अनुशासनवंशी

[ रागधनाश्रीः ]

उपवनजीवितपुष्पितरीते ? ॥१॥
पत्र प्रसवे फलिते फलिते शबलितसुषमाप्रीते ? ॥२॥
वक्त्रे चरणे हस्ते हृदये श्वासे तनुताप्रथिमा ॥३॥
व्यष्टिसमष्टिवने त्वं प्राणित आलोकप्रणतगरिमा ॥४॥
अक्षरमौलौ शब्दे वाक्ये रणिता चार्थ–प्रसिद्धिः ॥५॥
चेष्टाविपुला सततसमन्वय–वसुधाशतदलवृद्धिः ॥६॥
सन्ततसंकुलताव्यवधाने मार्गाणामाश्लेषः ॥७॥
कोलाहलसंघर्षप्रताने शाश्वतकलितोन्मेषः ॥८॥
तर्काणां पृथुकुञ्जनिकुञ्जे सुखवदहरितमनुमानम् ॥९॥
शासनशिल्पे सेनासरणौ सुरवीयूषप्रमाणम् ॥१०॥
मधुरागलये तालविकासे विधिहरहरसंगीतम् ॥११॥
मानवपूजाक्षितिजप्रसारे चन्दनधनमानीतम् ॥१२॥
उच्चैः निनद ! निनद ! त्वं भुवने वसतेर्वसतेर्गीते ॥१३॥
उपवनजीवितपुष्पितरीते ॥१॥

●

# प्रणतिपुरस्सरम्

[ रागधनाश्रीः ]

नित्यं व्याप्ततिकुङ्कुमरामः ॥१॥
उदयति रविरिव द्यावापृथ्वीभाले सरसप्रणामः ॥२॥
हिमगिरितुङ्गे भासितशृङ्गे दृगकरस्वर्णिमसेकः ॥३॥
सागरहृदये सरितामाने मृगमदचन्दनलेपः ॥४॥
द्रुमलतिकामरकतपरिरम्भे कुसुमं त्वाशीर्वचनम् ॥५॥
विषमोर्व्यां नेपथ्यप्रयोगे मधुमयकवितारचनम् ॥६॥
संवेदनदर्पणहेमन्ते विधुवासन्तिकबिम्बम् ॥७
मिहिकादेशे शुभ्रं त्वरणं मधुकरसौरभशिञ्जम् ॥८॥
शर्करिले कण्टककीर्णे पथि वनविजने पाथेयम् ॥९॥
शम्पाविकले वारिदखेदे आशालोकविधेयम् ॥१०॥
धूमे धूमे वह्नौ वह्नौ विकिरणश्लक्ष्णः शामः ॥११॥
नित्यं व्याप्ततिकुङ्कुमरामः ॥१॥

## गीतौ भीतौ हिमक्षोभः

[ रागधनाश्री ]

पुटपाके जातं हिमविपिनम् ॥१॥

भाषणदेशे गीतेर्लासे श्वित्रनिभं दृगधुवनम् ॥२॥

अदभुतपूरणप्रतिभास्फुरणे कलहकलुषसुखकणने ॥३॥

अमरीकालक्ष्म्या विपुलाशीर्वदि भीतेः प्रघणे ॥४॥

एशियोषापर्याये जातं . वात्याचक्रोष्णीषम् ॥५॥

विषुवल् लेखे द्वीपे द्वीपे भयपरमाणुकिरीटम् ॥६॥

हृदयं हृदयं मुण्डं मुण्डं हिमनवसंज्ञामथितम् ॥७॥

पत्रं पत्रं कुसुमं कुसुमं शतकल्पद्रुमसहितम् ॥८॥

ज्योतिष्फलिते शान्तेर्गणिते किं श्रेढीव्यवहारः ॥९॥

सत्ये सत्ये स्वप्ने स्वप्ने भ्रान्तेर्मधुपरिवारः ॥१०॥

इह तनुते विपुलं साम्राज्यं शीतसमरनवभाषा ॥११॥

अक्षांशान् देशान्तरश्लेषे दशति च कटुप्रत्याशा ॥११॥

मरुत ! गगन ! धरणे ! हरतेदं शीतं युद्धंचित्रम् ॥१३॥

दिनकरवक्त्रे हिमकरहासे कलयत सर्वं मित्रम् ॥१४॥

सिन्धौ वीच्यां गीतौभीतौ नश्यतु ननु हिमवमनम् ॥१५॥

पुटपाके जातं हिमविपिनम् ॥१॥

## बोधय ! नोजमीश्वरतांशम्

[ रागधनाश्रीः ]

बोधय ! हे ! निजमीश्वरतांशम् ! ॥१॥
शतपञ्चककोटिजनाः ! प्रत्येकं हर व्याप्तं ध्वान्तम् ॥२॥
प्रत्येकं नहि कज्जलमुकुलो भव हे प्रत्युत सूर्यः ॥३॥
क्षितिजे क्षितिजे भ्रान्तौ भीतौ चालोकानां तूर्यः ॥४॥
युद्धं धरणीगर्भे क्षारो भूयाद् परमाणुव्यथा ॥५॥
पेशलसुमजागरणे लुप्ता भूयात् इतिहासकथा ॥६॥
क्षुब्धं खातं चुम्बतु शिखरं, शिखरं प्रणमतु खातम् ॥७॥
सुरभिर्गगने प्रघणे विदलतु विकिरणपांसुलवातम् ॥८॥
श्वासे श्वासे च पुनातुधरां नन्दनवनमधुपवनः ॥९॥
नीडे नीडे स्याद् द्विजरावः जगति च प्रेमनिवहनः ॥१०॥
त्वं प्रत्येकं जागृहि, नाट्यं रचय च सत्यसुखान्तम् ॥११॥
बोधय ! हे ! निजमीश्वरतांशम् ॥

## प्रसह्यतापारे

[ रागधनाश्रीः ]

गीतैर्बध्ने विश्वं सकलम् ॥१॥
एकस्मिन् कौशेय सूत्रे, पार्थक्ये त्वतिविकलम् ॥२॥
सीमाः खड्गा जिह्वा निशिताः शतभूगोलप्रदेशे ॥३॥
छिन्दन्ति च मानवसमुदायं दुःखदखण्डानवेशे ॥४॥
काली गौरी पीता रक्ता तर्कवियुक्ताभ्रान्तिः ॥५॥
आर्थिकशोषणसर्पविषाक्ता रोदिति पोषणक्रान्तिः ॥६॥
एते शमयन्ति प्रसह्यं ननु सर्वे वशीं वीणाम् ॥७॥
वर्गे वर्गे कुर्वन्ति सदा जनतां व्यथितां क्षीणाम् ॥८॥
युद्धैः खिन्ना माता पृथ्वी रवणे रुद्रे रोषे ॥९॥
"विश्वं सर्वेषां दायित्वं" कथयति डिण्डिमघोषे ॥१०॥
मरुतो मेघा सिन्धुर्गगनं सर्वे मे स्वरकाराः ॥११॥
"गीतैर्बध्नेविश्वं सकलं' ! खल्विति प्रबलप्रचाराः ॥१२॥
गेहे बसतौ पथि भुवि प्रसरतु शक्तो गीतं तरलम् ॥१३॥
गीतै बध्ने विश्वं सकलम् ॥

## नवसन्दर्भे

[ रागधनाश्री : ]

किं पूजाभजनै : स्नेहरये ॥१॥
शतपञ्चककोटिजना मे रे देवा मम नतहृदये ॥२॥
नयनपथे द्योतत इह तेषां खलु प्रतिबिम्बसुवृन्दम् ॥३॥
श्रवणद्वये बहु रणितं तेषां कोलाहलनिकुरम्बम् ॥४॥
आसामीश्वरप्रतिमानां रे प्राणे जीवितसुरभिः ॥५॥
मम रसना वसुधागर्वाणां सुखदुःखपथे प्रणिधिः ॥६॥
स्पर्शे स्पर्शे सुखयति सत्तां तेषां श्वासजपवनः ॥७॥
अत्र च पुण्यमनीषायोगे प्रत्येकं स्वर्धवनः ॥८॥
आदर्शः प्रणमति तान् सूर्वान् श्रेयः प्रेयः शिविरे ॥९॥
सिद्धान्तः प्रणमति तान् चन्द्रान् खे नूतनाभाविकिरे ॥१०॥
मृग्यति किं ननुपुस्तकव्यूहः जगतो नवसन्दर्भे ॥११॥
लुप्ताका दमयन्तोवाञ्छा संप्रति विश्वविदर्भे ॥१२॥
शैलो गायति सरिता स्वनतिच सर्वेषां स्वरनिचये ॥१३॥
तेषामर्चा तेषां सेवा ज्योतिः कल्मषनिलये ॥१४॥
किं पूजाभजनै स्नेहरये ॥१॥

## तवरचना ! किं छलना ?

[ रागधनाश्री: ]

मानव ! ईश्वर इह तव रचना ॥१॥
आदर्शे सत्यशिवे शाश्वतसुन्दरतममतिकलना ॥२॥
चित्रं प्रतिमा चादर्शानां नन्ववलम्बप्रतीकः ॥३॥
किञ्चित् चापूर्णत्वं कश्चित् तत्र च तर्कव्यलीकः ॥४॥
मुकुलं मुकुलं कुसुमं कुसुमं शैलसरित्समुदायः । ५॥
सिन्धुः प्रकृतेः हृदयललाटे तस्याङ्गिकसमवायः ॥६॥
आदर्शनिवहने तस्य च सत् संज्ञा विकचवरिष्ठा ॥७॥
प्रत्येकनरे युक्ता श्रेष्ठा चेश्वरप्राणप्रतिष्ठा ॥८॥
तनुमन्दिरपरिधौ भर शिवतां कलिपेशल पाषाणे ॥९॥
भासेत च संघर्षे तिमिरे जीवितरत्नं शाणे ॥१०॥
दम्भैः सत्यशिवं बध्निहि न प्रसरति भूमौ छलना ॥११॥
मानव ! ईश्वर इह तव रचना ॥



## भूकम्पभये

[ रागसोरठः ]

चेतननयनं नहि हरणीयम् ॥१॥

उपचक्षुर्ज्योतिषि कान्तारे सर्वं नाहि छलनीयम् ॥२॥

यन्त्राणामतिशासनभशुभं भूमौ नहि करणीयम् ॥३॥

रोबटयान्त्रिकमानवशरणं नित्यं नहि रटनीयम् ॥४॥

तेषां शक्तेरतिदासत्वं नहि खलु स्वीकरणीयम् ॥५॥

"नरो न राजा, यन्त्रं सम्राट्" इति नहि व्याहरणीयम् ॥६॥

वैज्ञानिकद्युते क्रीडायां सर्वं नहि पणनीयम् ॥७॥

न्यायाहिंसामञ्चे सत्ये मलिनं नहि नटनीयम् ॥८॥

अतिभोगविलासाविलनिशिवद् दिवसे नहि भ्रमणीयम् ॥९॥

कुक्कुटस्वर्णाण्डस्य च लोभे ज्ञानं नहि दमनीयम् ॥१०॥

मस्तिष्कं सम्राट्, हृदयं स्यान् मन्त्री इति ग्रहणीयम् ॥११॥

सर्वाचरणे सिन्धौ याने सन्तुलनं कलनीयम् ॥१२॥

तरणौ तु नरः, न नरे तरणिः, इति नहि विस्मरणीयम् ॥१३॥

चेतननयनं नहि हरणीयम् ।



## रिक्थस्यानुपाने

[ रागसोरठः ]

संसृतिरेषा कठिनपरीक्षा ॥१॥
विपिते वसतौ सैकतदेशे नहि त्यजनीया कक्षा ॥२॥
नगरे नगरे ग्रामे ग्रामे रे ग्रहणीया शिक्षा ॥३॥
कर्मठतोद्याने रे गैरिक-वस्त्रं किं, का भिक्षा ॥४॥
संसारस्य न दिनकरसारः खलु संन्यासापेक्षा ॥५॥
मन इह व्यष्टेर्विपुलसमष्टेः करणीया नोपेक्षा ॥६॥
परदुःखनिवारण आचरणे द्योतत ईश्वरप्रेक्षा ॥७॥
निशि दिवसे नितरां जपपूजाः शिवसफला न तितिक्षा ॥८॥
उचितं कार्यं ह्युचिते समये त्विति निष्कर्षविवक्षा ॥९॥
उचितो विधिरपि गेहे द्वारे पूर्णा ह्युचितदिदृक्षा ॥१०॥
समवेदनमुपवनसुमहृदये स्वर्गिकसुफलसिसृक्षा ॥११॥
कर्तव्यपथे ग्रहताराणां रिक्थं कर्मप्रतीक्षा ॥१२॥
संसृतिरेषाकठिन परीक्षा।

## जीर्णोद्धाराय

[ रागसोरठः ]

भुवि परमादेवी मानवता ॥१॥
परमविषण्णा सीदति रोदिति; परिहसति च दानवता ॥२॥
सा देवी वन उपवनवसतौ भ्रमति च भ्रान्ता सरणौ ॥३॥
व्रणिता क्लान्ता क्षान्ता मज्जति विन्दौ सिन्धौ तरणौ ॥४॥
तुङ्गे शिखरे सौधे छादे मुरवरितकाञ्चनवर्षा ॥५॥
उटजे ध्वान्ते मुञ्जे मुञ्चति वाष्पं तस्यास्तर्षा ॥६॥
शस्त्रास्त्रैः पीडित श्वासा सा सुन्दरफलकुसुमस्था ॥७॥
परमाणोर्ध्वनिस्पर्धायां विलपति भूकम्पव्यथा ॥८॥
शीते युद्धे शोषणबृद्धे क्वहि तस्याः निर्भयता ॥९॥
क्वच तन्यमूल्यानां मानकता, क्व च करुणा परवशता ॥१०॥
ध्वस्तं तस्या मन्दिरप्रघणं जीर्णोद्धारं कुरु हे ॥११॥
सुमते ! मृग्य च पूजकवृंदं पूजाद्धारं कुरु हे ॥१२॥
जीर्णे शीर्णे शतव्ययदेशे विकसति भावननवता ॥१३॥
भुवि परमादेवी मानवता ।

## ज्वालायां गीतम्

[ रागसोरठः ]

अधिकाराग्निर्ज्वलति तु विपुलम् ॥१॥
दहति च कुसुमितज्योत्स्नां हरितं दिवसं सरितानिचुलम् ॥२॥
व्युषति तु चन्दनविपिनं गीतं चाक्रीडं सुमरुकुलम् ॥३॥
व्यष्टिसमष्टीनां पृथुवृन्दं सलिले दिवि भुवि विकलम् ॥४॥
वसतौ वसतौ मरुतायामपि भस्मनि हाहाकारः ॥५॥
चेतसि मथितो हृदये व्यथितो निर्बलद्रुमपरिवारः ॥६॥
गच्छति धूमस्तुङ्गं रिक्तौ कर्तव्यानां ज्वलने ॥७॥
धमति च झञ्झा जीवितव्यङ्ग्यम् नानादुःखस्खलने ॥८॥
देशे देशे मतिसमुदाये शीतं समराह्वानम् ॥९॥
शिशिरे श्वासविरहितं सकलं रे बन्धुत्वाधानम् ॥१०॥
अक्षांशक्रोधनभाले खलु रे देशान्तरजाले ॥११॥
अधिकाराग्निसमुद्रे भीमे वीचीनां जलताले ॥१२॥
बारं बारं मज्जति मज्जति कर्तव्यानां यानम् ॥१३॥
दूरं नय रे शमय च शमय च संप्रति वह्निविमानम् ॥१४॥
रक्ष च ननु कर्तव्योद्यानं सज्जय च पुनः पृथुलम् ॥१५॥
अधिकाराग्निर्ज्वलति तु विपुलम् ।

## शब्दब्रह्मसपर्याह्वानम्

[ रागसोरठः ]

सुकवे ! उद्धर ! त्वं संसारम् ॥१॥
विदल च वैज्ञानिकलक्ष्याणां वह्नेः कारागारम् ॥२॥
ऊर्जां कुरु परमाणुबमानां भीषणभाण्डागारम् ॥३॥
परिवर्तय गीतानां मन्त्रैः पुञ्जपतीनां हृदयम् ॥४॥
सौधे सौधे खलु पाषाणं कुरु मृदुज्योत्स्नासदयम् ॥५॥
ऊर्मिलासिन्धौ भ्रान्तं राज्ञां नीतेः प्रथितवहित्रम् ॥६॥
आह्वय न्यायमहिंसां सत्यं ननु सन्धातुमरित्रम् ॥७॥
निखिले शासनप्रतिमारचने भर नूत्नपवित्रत्वम् ॥८॥
संप्रति शान्तिशिवालयसरणौ निवह च नवमित्रत्वम् ॥९॥
रचनात्मकक्रान्तिकृते कुरुकुरु शब्दब्रह्मसपर्याम् ॥१०॥
उद्घाटय सन्याससग्रहणे नूतनदिनकरचर्याम् ॥११॥
पिक ! शुक ! बोधय भूपरिवारम् ॥१२॥
सुकवे ! उद्धर ! त्वं संसारम् ।

# अयि रक्तदानिन्

[ रागसोरठः ]

दिनकर ! तवरक्तभृता वसुधा ॥१॥
त्वयि मिषति न नश्येत् काञ्चनपथि सा विषवाते तु मुधा ॥२॥
चन्द्रस्तव प्रतिबिम्बं तस्य च किरणेभ्यः स्रवति सुधा ॥३॥
जागरयतु ! अरुणचूड ! इह तव दूतो विश्वं सकलम् ॥४॥
उटजकुरोगं सौधसुरोगं हर, कुरु सर्वं विमलम् ॥५॥
सकलं जनतन्त्रं ग्रथयति च ते चिरस्वर्णिमवचनम् ॥६॥
औषधधवलप्रमान्नं सुफलं ननु ते कृत्स्नं रचनम् ॥७॥
मानवता तु सहचरी नित्यं कुरुते जीवितप्रश्नम् ॥८॥
मर्जय तस्याः निखिलां भीतिं विकचीकुरु सुखस्वप्नम् ॥९॥
देशान्तरव्रणिताक्षांशरणे वितर च पाठं शान्तेः ॥१०॥
प्रतिदिवसं शोणितसेकैः हर दुःखं भूमेः क्रान्तेः ॥११॥
संहर कुष्ठा, क्षोभाक्रोशौ सपदि च निजभासमुदा ॥१२॥
दिनकर ! तव रक्तभृता वसुधा ।

## जगतो वासन्तिक परिहासे

[ रागविहाग : ]

अविगणय न मानवपरमाणुम् ॥१॥
जडतापरमाणुवनोर्जा भुवि स्फुटयत्युल्वणभानुम् ॥२॥
यदि स्फुटति तु चेतनपरमाणुः तस्य तु का शक्तिकथा ॥३॥
शोषणविपिने घर्षणवह्नौ तस्य तु का ध्वंसव्यथा ॥४॥
तुङ्गं वमनं पर्वतदलनं रचयति विस्फूर्जथुता ॥५॥
अणुबलबज्रैः कम्पेते भूः, नभसो रत्नप्रभुता ॥६॥
परमाणुयुगे परमाणुखे विश्वं जातं नूत्नम् ॥७॥
मृन्मयमूल्यं नीतेर्नमनं ध्वस्तं सर्वं प्रत्नम् ॥८॥
सङ्कुलतायां वसतौ वसतौ दीपोपेक्षितलघुता ॥९॥
जागरयति निद्राणान् दिवसान् नवनृपनीतेः पटुता ॥१०॥
नवरविरचने नवविधुवचने पूजय सर्षपमानम् ॥११॥
जीवनघोषे शम्पापीडे त्वजय सुमसंमानम् ॥१२॥
कसन्तिकपरिहासे शमय च किं शुककपटकृशानुम् ॥१३॥
अविगणय न मानव परमाणुम् ।

## अमृतगवेषणसरणौ

रागविहागः

अद्यनिशीथे नहि स्वपनीयम् ॥

गगनं धमति तु चन्द्रकशङ्खं शृणु शृणु किं वचनीयम् ॥२॥

छायागणिते कुण्ठितवृत्ते फलितं किं कलनीयम् ॥३॥

मिहिकोच्छ्वासे युद्धकगीतं लुप्तं त्वतिस्पृहणीयम् ॥४॥

स्वास्तिकधमनीशोणितधारे हृद्युष्णत्वं संमथितम् ॥५॥

प्रश्नाकुलमन्दिरपरिवेशे ननु देवत्वं व्यथितम् ॥६॥

संप्रति बहु प्रचलति च स्वैरं यामाश्वापदसंघाः ॥७॥

भागीरथस्वप्ने प्रवहन्तितु शून्ये शतशतगङ्गाः ॥८॥

ध्वान्तकाषायेतरसकासारे नयति च कुवलयतरणिः ॥९॥

प्रथयति नीराजनधैर्यं रे ! अमृतगवेषणसरणिः ॥१०॥

उदिते रक्ते स्फोटे प्रतिमान्वृन्दं सुखवरणीयम् ॥११॥

अधुना भूतविकलदिवसशवं त्वरितं जागरणीयम् ॥१२॥

गृहगृहकालव्रणितं ज्योत्स्नम्लेपमयं करणीयम् ॥१३॥

अद्यनिशीथे नहि स्वपनीयम् ।

## वन्दे शून्यम्

[ रागसोरठः ]

हरितं शून्यं नीलं शून्यम् ॥१॥
रक्तं शून्यं, पीतं शून्यं शुभ्रं श्वेतं शून्यम् ॥२॥
मीलितशून्यं विकचं शून्यं मूकं ध्वनितं शून्यम् ॥३॥
यूथीलतिका स्पृष्टं शून्यं मार्गास्पृष्टं शून्यम् ॥४॥
प्रमुदितशून्यं सुरभितशून्यं विटपाविष्टं शून्यम् ॥५॥
शब्दैः रूपैर्विकलं शून्यं यन्त्रितमन्त्रितशून्यम् ॥६॥
कलितं शून्यं वलितं शून्यं चञ्चलगत्वरशून्यम् ॥७॥
रथितं जाड्यविपुष्टं शून्यं पृथुलं क्षीणं शून्यम् ॥८॥
व्यथितं वृद्धिवरिष्ठं शून्यं मथितं कीर्णं शून्यम् ॥९॥
नयनं शून्यं हृदयं शून्यं आशस्तीर्णं शून्यम् ॥१०॥
स्फुटितं शून्यं गुप्तं शून्यं, तर्कविषण्णं शून्यम् ॥११॥
प्रणयविमृष्टं दृष्टं शून्यं स्नेहविलुब्धं शून्यम् ॥१२॥
अगणितभणितं गणितं शून्यं करुणं सार्थक शून्यम् ॥१३॥
देशे शून्यं काले शून्यं गेहे द्वारे शून्यम् ॥१४॥
द्वीपे शून्यं ध्वान्ते शून्यं मेधे शम्पाशून्यम् ॥१५॥
आर्य ! सर्वत्रगमोहन शून्यं स्वास्तिकशापित शून्यम् ॥१६॥
मरणं शून्यं जन्मतु शून्यं शून्ये चर्चितशून्यम् ॥१७॥
वीजस्थं निर्वीजं शून्यं कविकूटस्थं शून्यम् ॥१८॥
प्रभवति शून्ये हृतप्रभशून्यं वन्दे सत्ताशून्यम् ॥१९॥
हरितं शून्यं नीलं शून्यम् ॥१॥

●

## एतस्मिन् चतुष्पथे

[ रागसोरठः ]

अयि ! अद्य चतुष्पथ एतस्मिन् ।।१।।
कोलाहल आक्रीडस्त्वेष नु, शब्दास्तरवस्तस्मिन् ।।२।।
संकेता वर्णव्याहृतयः सुमनिकुरम्बं विकलम् ।।३।।
चक्रे चक्रे सूर्यश्चन्द्रः गगनं शाद्वलविपुलम् ।।४।।
अस्मित्वं पाथेयं खिन्नं कायाः प्रश्नप्रतिमाः ।।५।।
इह छाया याता ह्यायाता, बुद्बुदश्वासे सीमाः ।।६।।
आशाव्याधिः मार्ग निदानं रथ्या धूलिप्रणामाः ।।७।।
दिवसे गन्धकदाहा यात्रा मधुवीप्सा आयामाः ।।८।।
मिलने मिलने मुखराभिज्ञा चिन्ता कस्मिन् कस्मिन् ।।९।।
अयि ! अद्य चतुष्पथ एतस्मिन् ।।१।।



## जनतागीतम्

सुरभारती गायति शिखरे।
भजरे जनतां, भज मानवताम्,
भज मानवतां, भज श्रेष्ठमते ! ।

आर्थिक भेदः कः पदमपि किम् ?
का रे जातिः, को रे धर्मः ?
कः सामाजिकतुलनावर्गः ?
किं रे लिङ्गं, को रे वर्णः ?

भज रे जनतां, भज मानवताम्
भज मानवतां, भज श्रेष्ठमते ! ॥१॥

जन एष तु भुवि संज्ञाशिखरम्,
जन एष तु खलु सृष्टौ श्रेष्ठः,
तर्के तर्कः गीते गीतम्,
प्रश्नः प्रेष्ठः, स्वप्नः श्रेष्ठः ।

भज रे जनतां, भज मानवताम्,
भज मानवतां, भज श्रेष्ठमते ! ॥२॥

सर्वकृते खलु पुष्कलखाद्यम्,
सर्वकृते पर्याप्तावासः,
कस्यापि न स्यात् कश्चिदभावः
सर्वकृते तनुरक्षकवासः ।

भजरे जनतां, भज मानवताम्,
भज मानवतां, भज श्रेष्ठमते ! ॥३॥

सर्वंकृते खलु पूर्णो न्यायः,
नैतिकमूल्यार्चितसिद्धान्ताः
स्याच्चाहिंसा जगतीमाता
सर्वेषां ननु करुणाप्रान्ताः !

भज रे जनतां, भज मानवताम्,
भज मानवतां, भज श्रेष्ठमते ! ॥४॥

युद्धं हित्वा, शान्ति धृत्वा
स्नेहो विहितः, शीलो विहितः
रवि-वन्धुत्वे विधुज्योत्स्ना स्यात्,
आकाशे शोकः स्यात् प्रहितः,

भज रे जनतां, भज मानवताम्,
भज मानवतां, भज श्रेष्ठमते ! ॥५॥

गृहे गृहे रच मङ्गल लतिकाम्,
द्वारे द्वारे मङ्गलविटपम्,
प्रघणे प्रघणे मङ्गलदीपम्,
उपवन उत्सवसुमनः सुखदम्,

भजरे जनतां, भज मानवताम्,
भज मानवतां, भज श्रेष्ठमते ! ॥६॥

परहितभासितसौरभप्रणतिम्
पथि पथि सज्जय चाशीर्वचनम्,
नैरुज्यं ननु वसतौ वसतौ,
नवस्थापत्ये कुरु नवरचनम,

भजरे जनतां, भजमानवताम्
भज मानवतां, भज श्रेष्ठमते ! ॥७॥

ईश्वरवाचकशब्दो जनता,
धर्मः, कामश्चार्थो जनता,
अतुलो मोक्षनिवासो जनता,
पूजापावनपङ्क्तिर्जनता,

भज रे जनतां, भज मानवताम्,
भज मानवतां भज श्रेष्ठमते ! ॥८॥

## सावधान

होलीवह्निः, होलीवह्निः
विलुलितजिह्वः, परमप्रचण्डः !
दर्मददुर्मदपश्चिदपवनः
युद्धर्ककिंशुकशोणितनयनः
उल्वणखङ्गान् क्रोधे क्षोभे
वहति च मार्गे भीषणखणः ।
होलीवह्निः, होलीवह्निः
विलुलितजिह्वः, परमप्रचण्डः ॥१॥

प्रस्तर ! द्रव रे, पर्वत ! द्रव रे !
निर्झर ! कस्त्वं भीमः ! द्रव रे !
पादपः द्रव रे ! जाङ्गल ! द्रव रे !
गगन ! च प्राक्तनजर्जर ! द्रवरे !
होलीवह्निः, होलीवह्निः
विलुलितजिह्वः परमप्रचण्डः ॥२॥

अपसर मार्गादपसर मार्गात्,
हरहरहुङ्कृतिसागरगर्जन !
अपसर रे नीलरथाटोयात्
सुरधनुषा किं ? तडितस्तर्जन !
होलीवह्निः, होलीवह्निः
विलुलितजिह्वः परमप्रचण्डः ॥३॥

नहि केवल मार्तण्डे ज्वाला,
विपिने ज्वाला, मेघे ज्वाला,
घूर्णितवसुधागर्भे ज्वाला,
प्रातर्ज्वालादिनमपिज्वाला ।
होलीवह्निः, होलीवह्निः
विलुलितजिह्वः परमप्रचण्डः ॥४॥

प्रतिसंघर्षं कोणे कोणे
घूघूघर्षणबलवज्ज्वाला,
कष्टत्रिकाले रुद्रताण्डवे
त्र्यम्बकप्रलयङ्करस्वरज्वाला ।

होलीवह्निः, होलीवह्निः
विलुलितजिह्वः परमप्रचण्डः ॥५॥

प्रत्ययपवनः तूर्यंनिनदनः
ज्वालामाली ज्वालासवनः,
शिशिरच्छलनो मिहिकादहनः
आगच्छति पुरत्तो भयदलनः ।

होलीवह्निः होलीवह्निः
विलुलितजिह्वः परमप्रचण्डः ॥६॥

मनसा सत्ये, वाचा न्याये
शस्त्रेकुशलः शास्त्रविधानः,
सहिरणनिपुणः, करुणाप्रवणः
हिंसाहिमहरशरसन्धानः ।

होलीवह्निः होलीवह्निः
विलुलितजिह्वः परमप्रचण्डः ॥७॥

## पाषाणानामुष्णं रक्तम्

पाषाणानामुष्णं रक्तम्,
काशे क्वथितं तुमुलं स्फूर्तम्,
आयस वक्षसि कालावेगे
गुप्तं चोल्कावस्त्रं मूर्तम् ॥१॥

पाषाणायसमैत्रीयोगे
यो रौद्रो निःस्वनताक्रोधः
वर्षति शतशो वह्नेर्वा गान्,
प्रसरति तूले चोग्रविरोधः ॥२॥

दग्धुं शक्नोति च बहुवसतिम्
विपुलं ग्रामं पृथुलं नगरम्,
शैलौद्धत्यं नीलक्ष्वेडम्
जिह्मं तुङ्गं गर्वं सकलम् ॥३॥

शक्नोति क्षणे क्षारं कर्तुम्
गेहे मार्गे कालो भूत्वा,
शक्नोति पले धूमं कर्तुम्
गगने भूमौ लुप्वा लुप्त्वा ॥४॥

उल्वणज्वालामुखफूत्कारैः
प्लावो दहति च द्रवितो द्रवितः,
दहति च सूर्यं [illegible]न्द्रं प्रवनम्
हरितं सिन्धुं [illegible]रितः स्रवितः ॥५॥

लक्षशतन्घीधमनीयूथे
कोटिभुशुण्डिकविप्लवगवे
उद्दामं चोद्घोषप्रसृनम्
प्रस्तररक्तं ध्वंसाप्लावे ॥६॥

दग्धुं शक्तं जिष्णोः केतुम्
मेघे मेघे सप्तकवितम्
करकाशम्पाध्वंसनवर्षम्
पविगर्वे विस्फूर्जंथुनिरतम् ॥७॥

काका गृद्धा वृकक्रोष्टारः
सर्वे हिस्राः श्वापदनाथाः,
सदा तु विभ्यति दिवसे नक्तौ
रक्तजगाथाः प्रलयसनाथाः ॥८॥

# चकितम्

[ रागधनाश्रीः ]

सीदति यत्नो रोदिति प्रतिभा ॥१॥
नितरां वाष्पं मुञ्चति करुणं हृदये मधुगीतिविभा ॥२॥
दिनकरशतशतकण्टकनिकरैर्विद्धाः सुमपरिहासाः ॥३॥
दोषाकरबहुदोषविताने खिन्नाश्चिरप्रत्याशाः ॥४॥
वारिदभिन्ने ध्रुवसंकेते तारे मज्जति यानम् ॥५॥
अतिनिर्विण्णं क्लिन्नं छिन्नं विलपति हा संयानम् ॥६॥
ज्वालास्नेहे वर्तीबन्धे विकलं ज्योतिर्ज्ञानम् ॥७॥
आहतमार्गे संज्ञाशून्ये कर्मप्रतीतेस्त्राणम् ॥८॥
विदलितविश्रम्भे देवपणे प्रस्तरखण्डितभक्तिः ॥९॥
धूपे नैवेद्ये धूमव्यथा देवार्चन आसक्तिः ॥१०॥
मूकं गगनं वधिरा धरणी सत्ता किमु सर्पनिभा ॥११॥
नहि शृणुते जीवितपरिलेखः, न च काचिद् द्योपलमा ॥१२॥
सीदति यत्नो रोदितिप्रतिभा ।

## पङ्किलपल्वलप्रथिमा

[ रागविहागः ]

पङ्किलपल्वलमरकतहसितम् ॥१॥
रसमेधितकदलीगेन्दुकसुम — जलकुम्भीमदग्रथितम् ॥२॥
क्षीरिणि ! सैकतक्षोभे मिहिकाखिन्ने किं व्रणप्रथितम् ॥३॥
सर्षपपारिणयपीताश्लेषे वैकल्यं मधुमथितम् ॥४॥
बब्बूलानां चिन्ताविपिनं नीखरव्यातौ लिपितम् ॥५॥
उटजविचारे निम्बादेशे ईक्षुकरे किं स्फुरितम् ? ॥६॥
मार्गाणां त्रुटितास्थिसमूहे दैन्यं निर्दयरथितम् ॥७॥
आम्राणां मसिक्षितिजनिवेशे ग्रामे धैर्यं वलितम् ॥८॥
गोवृषमहिषानामिह वृन्दे रटति तु काकबुभुक्षा ॥९॥
बहुचेष्टापदसंसृतिभ्रान्ता का ह्युत्थानप्रतीक्षा ॥१०॥
ध्वनिप्रतिध्वनिसंकुलतायां किं किं नूत्नं रचितम् ॥११॥
पङ्किलपल्वलमरकतहसितम् ॥१॥

## मधुमध्याह्ने मुखरितम्

[ रागसोरठः ]

पल्वलपारे कुङ्कुमकविता ॥१॥
हरितप्रहेलीकुसुमितपीता नीलिमजागररसिता ॥२॥
काञ्चनप्रत्ययतद्धितमुकुरे मधुव्याकरणे मथिता ॥३॥
स्मेरे गन्धवहे परिरम्भे मध्याह्नाक्षरमिलिता ॥४॥
हृदि तरुलतिकानामाहार्ये विजने विजने वलिता ॥५॥
उत्प्रेक्षाणां रससीमन्ते उपमाप्राणैः प्रथिता ॥६॥
नववासन्तिकपरिपृच्छायां कुसुमैर्मुकुलैर्ग्रथिता ॥७॥
अध्याहारे प्रणयारोपे दिनकरगीतिविलसिता ॥८॥
तत्वप्रकेते दृग्व्यापारे तत्वैस्तत्वैर्ध्वनिता ॥९॥
शब्दविहीने गत्याख्याने निश्चलचरणे चलिता ॥१०॥
भ्रमरा नहि मञ्चे नेपथ्ये केयं शिञ्जा ललिता ॥११॥
पल्वलपारे कुङ्कुमकविता ।

# मिहिकामौनम्

मिहिकामौनं सुकिरणवर्णैः
पठति तु शुभ्रं सस्वरवेदम् ।
अनुवादे निरताः पन्थानः
काञ्चनधीः हरति तु निर्वेदम् ॥१॥

आयामानां नीलं रक्तम्
पीतं हरितं नृत्यं कलिनम्,
विहितं सीमानां व्याख्यानम्
शाखाचङ्क्रमणं तरुवलितम् ॥२॥

आप्लावो मृदु शून्ये परितः
फेनकवनचन्दनव्रीडायाः,
ज्योत्स्नायाःसितचूर्णक्रोशे
गतिराहित्यानां क्रीडायाः ॥३॥

मनने निः स्पन्दाः खलुध्वनयः,
उत्तररहिता जडप्रतिध्वनयः,
सुप्ता कुवलयपरिमलकवयः
सितकणभ्रान्तः सौरभविनयः ॥४॥

दर्शननिर्देशननिकुरम्बम्
वहति तु रसचिन्तननिर्मोकम्
आग्रहनिग्रहविग्रहपारे
संबध्नाति च कृत्स्नालोकम् ॥५॥

कस्य कथय चोच्छ्वासशरीरम्
हीरकविरलत्वानां जालः
शब्दानां विपुलाकृतिहासः
रुद्धश्चारोहाणां तालः ॥६॥

स्फटिकप्रश्नानां सन्दोहे
उदयति विष्णोः कथमथ चक्रम् ?
प्रथयति दृष्टि स्फुरयति सृष्टिम्,
परितः प्रसरति मथितं तक्रम् ॥७॥

## दिनकरजीवितसन्दर्भं !

] रागसोरठः ]

हरितहरितजीवितसन्दर्भं ! ॥१॥

पीताम्बरपणपवनपरागे श्रृणु मयमिहिकागर्भं ! ॥२॥

उत्पथपथमञ्जुलपरिवेशे दूरे लक्ष्मणरेखा ॥३॥

प्रचलति विचलति विहसति छलयति का रे दिनकरलेखा ॥४॥

सलिले द्रविते स्थिरताशयने गीते दर्पणकामा ॥५॥

स्मेरालिङ्गनघनधनप्रसरे मधुकरमनोऽभिरामा ॥६॥

सखि ! चल चलबब्बूले देशे कण्टकिते रोमन्थे ॥७॥

गाय च फागं गाय चचैतां पदसंबोधितग्रन्थे ॥८॥

अतिशिशिरशिशिरशून्ये हृदये रोमाञ्चित-व्याकुलता ॥९॥

निकटे बहुत्रुटिकरसंवादे कृशगात्री संकुलता ॥१०॥

वद वद नन्दनकानन । भवने किं वा प्रणतविदर्भं ॥११॥

हरितहरिजीवितसन्दर्भं ।

## हरिते हरिते प्रत्याहारे

[ रागसोरठः ]

मृग्यति दूरात्किं सीमान्तः ॥१॥
सर्षपपीतैः कुसुमैः किमधु पृच्छति दर्शनप्रान्तः ॥२॥
उदितास्तत्वानां शतरवयः किंशुकशोणितजाले ॥३॥
कूजति भ्रमति तु प्राणायामः नवमञ्जिरतरसाले ॥४॥
दिवसैर्दुर्ललिता कलिनियमाः अतसीनीलिमस्वप्रे ॥५॥
अन्विष्टं पातञ्जलिसूत्रं संयमप्रथिते गगने ॥६॥
मार्गे मार्गे भ्रान्ता ग्रन्थाः, कीर्णा संसृतिप्रीतिः ॥७॥
उच्छ्वसिता प्रणयाकुलपवने वनवासन्तिकरीतिः ॥८॥
रे कुज्झटिकापलिते केशे नहि वैराग्यप्रतीतिः ॥९॥
हरिते हरिते प्रत्याहारे उपरतिराज्ञो नीतिः ॥१०॥
चुम्बति निम्बं चुम्बति कदलीं योगविरतकासारः ॥११॥
दोषामथितः निगदति किञ्चिन् नहि मुक्तेर्व्यापारः ॥१२॥
कुसुमाकरकोरकमुकुलेषु च बहुनिगडितसिद्धान्तः ॥१३॥
मृग्यति दूरात्किं सीमान्तः ।

## मा वद

[ रागधनाश्रीः ]

मा वद ! गीतं नहि रचनीयम् ॥१॥
स्फुरणारोहे भावोन्मेषे किञ्चिन् नहि वचनीयम् ॥२॥
वासरवंशीरजनीताले "रुनझुन" नृत्यति रागः ॥३॥
रौति च वहुव्रणविदलितगगने व्यग्रनिशीथविहागः ॥४॥
पवनः प्रणयनिवेदनसुरभौ विहसति मुकुले मुकुले ॥५॥
आलोकः संलपति च सूक्ष्मं चित्रे रङ्गे चटुले ॥६॥
ऋतुपथशिविरे शिविरे खेलति शान्तिः खेलति क्रान्तिः ॥७॥
कूर्दति शब्दे शब्दे तर्कः, कुशलं पृच्छति भ्रान्तिः ॥८॥
बबूलानां मधुरोमाञ्चे विकसति कण्टकक्रीड़ा ॥९॥
प्रातः पथि पथि रचयति कुङ्कुम श्लोकं सन्ध्याव्रीडा ॥१०॥
मञ्चे मञ्चे स्थित्वा स्थित्वा कथमथ नहि नटनीयम् ॥११॥
मा वद ! गीतं नहि रचनीयम् ।

## भावना

[ रागधनाश्रीः ]

इच्छति विन्दुः सिन्धुभवितुम् ॥१॥
इन्दुर्भूत्वा स्वस्तिकतुङ्गे गगनं बन्धुं मथितुम् ॥२॥
दिनकरमुकुरात् काञ्चनवचनात् परितः स्वर्णं प्रथितुम् ॥३॥
उडुगणनयनात् भवने भवने रत्नसमूहं रचितुम ॥४॥
मरुदेशे कणिकानिर्देशात् बह्वश्वत्थान् रचितुम् ॥५॥
सैकतपूर्णसमन्वय रागे शतशः शैलान् वलितुम् ॥६॥
त्रसरेणूनां सहकम्पन इह नव नव गीतं ग्रथितुम् ॥७॥
कोटिस्फुलिङ्गानां परिरम्भे शून्ये शम्यां स्तरितुम् ॥८॥
रिक्तौरिक्तौ तर्कविसर्गैः मरकतपटहं नदितुम् ॥९॥
छिद्रे छिद्रे वंशादर्शं मधुरं मधुरं क्वणितुम् ॥१०॥
अजयमहत्वाकांक्षामेतां कोऽपिन शक्तो भणितुम् ॥११॥
विन्दूनां विद्युद्वेगं भुवि. कोऽपिन शक्तो श्लथितुम् ॥१२॥
इच्छति विन्दुःसिन्धुर्भवति ॥१॥

## पुनरायोगे

[ रागधनाश्रीः ]

लिखतिप्रमा किं लोहितमसितम् ॥१॥
नहि तूली नहि रङ्गः सर्वं भ्रमणे व्यङ्ग्यविलसितन् ॥२॥
कुत्र तु कुसुमं कुत्र चकलिका तत्किं सौरभरसितम् ॥३॥
तिमिरे नहि प्राणाः नहि श्वासाः किं तद्धृदये कथितम् ॥४॥
रजनीप्रसरे द्वाभाविनये किं कलधौतं मथितम् ॥५॥
ज्योतिः प्रतिपत्तेः सञ्चारे मधुरं मौनं स्फुरितम् ॥६॥
अन्विष्टं शीघ्रं भविता खलु नभसश्चाटुं हसितम् ॥७॥
द्वारे द्वारे भवने भवने चलिता मुक्तं गणितम् ॥८॥
जडताप्रघणे सरितानवलं चेष्टाकाव्यं ललितम् ॥९॥
आयामानां विपणौ भणिता मुकुरे नयने वलितम् ॥१०॥
ब्राह्मं तन्मात्रिकसंघटनं कुञ्जे कुञ्जे प्रथितम् ॥१२॥
दिनकरहस्ताक्षरमधुविपिने तरिता वाक्यं व्यथितम् ॥१२॥
लिखति प्रभा किं लोहितमसितम् ॥१॥



## चलचल दिग्विजयकृते

क्रुद्धं चण्डं झञ्झावक्त्रम्,
क्रुद्धं रुद्रं दिवि प्रालेयम्,
क्रुद्धो विस्फूर्जथुसंवेगः
क्रुद्धा पथि सर्वा सीमेयम् ॥१॥

उद्दामे क्रोधे गर्जति किम् ?
मेघो धृत्वा शरकरवालान्,
कूर्दन् कूर्दन् क्षिपति च परितः
भीषणमारकज्वालाजालान् ॥२॥

अट्टं विहसति किं दुर्धर्षम्
रक्तं दत्वा दत्वा गगनम् ?
मस्तकतिलकं कृत्व कृत्वा
वीराणामु पप्लवति च प्रघणम् ॥३॥

अति क्रोधान्धा रौद्रं मन्त्रम्
धरणी पठति च हरितं हरितम्,
पञ्चाननरूपं चास्थाय
आदिशति वनं मृत्योर्घटितम् ॥४॥

विद्रोहे रक्ताविलखड्गः
उच्चैरुच्चै नदति तु तूर्यम्
सूर्यो विलिखन् मरकतहृदये
काञ्चनतन्त्रे निजभुजशौर्यम् ॥५॥

अयने त्वयने शतशः क्रान्तिः,
वलने वलने शूराह्वानम्,
पलितं पलितं क्षिप्त्वा क्षिप्त्वा
कुरु कुरु झटिति च नवमभियानम् ॥६॥

रोदिति बालो रोदिति महिला,
स्फुरति तु भुवि नितरामसिधारा,
ऊर्जस्वितमङ्गलनयना रे
पविप्रणीता ध्ह्यायससारा ॥७॥

चल चल दिग्विजये सन्नद्धे
त्रिनयनताण्डवजुष्टे कविते ?
त्वं बोधय जीवितशवशैलान्
नहि चिन्ता हृदि बहुशो व्रणिते ॥८॥

## पूर्णाहुतिप्रश्ने—पूर्णाहुतिप्रकरणे

अद्य तु काञ्चनमुष्टिर्ज्वालयति
हवनाग्निं दिवि भूमा आकाशे
होतः ! होतः यागे वनझञ्झा
प्रचलति भीनं कटुधूमविकासे ॥१॥

उडुगणचरुमात्रा ज्वालसमाप्ता
इह सर्वममेध्यं संप्रतिशेषम्,
नहि पूर्णा जनहितकठिनप्रतिज्ञा
आह्वय ! प्रीणय ! ननु पुनः गणेशम् ॥२॥

दुर्धर्षा संप्राप्ताहुतिवेला
पुण्ये केनापि विलम्बेनालम्
अर्जय शौर्यं, वर्जय कादरताम्
नह्यतिवाहय त्वं व्यर्थं कालम् ॥३॥

धारय ! धारय ! शुभ्रं करवालम्
कृन्त ! कृन्त ! त्वरितं निजं गलम्,
अर्पय ! अर्पय ! तद्वह्नेः कुण्डे
क्षिप ! क्षिप ! पूर्णाहुतिरक्तोष्णजलम् ॥४॥

## प्राशुनाम्ना

प्रांशुप्रकरण ! प्रांशुनाम्ना
नीलपविगल ! नीलपविगल !
कालताण्डव ! प्रलयदर्पणः !
विषककुद्मन् ! अमृतकरतल ॥१॥

रोषस्फातौ वह्नि-शायक ! मेथस्फोटे चण्डगीते !
घर्षणे भुवि गर्जने दिवि शङ्खघोषक ! शब्दशोते !
देवतानां शौर्यशम्पा-क्रोधप्रथणे कूटप्रथिमा,
स्वप्नझञ्झा-तरुणवेगे त्वं हि चिरगाण्डीवगरिमा ॥२॥

शून्यनाम्ना शून्यनाम्ना
नीलपविगल ! नीलपविगल?
तुङ्गस्वस्तिक ? वाणवर्षिन्? 
स्वर्णकेसर ? सिंहवनबल ? ॥३॥

कान्तिकारिन् ! शान्तप्रहरिन् ! सृष्टिकेतन ! विजयवर्त्मन् ?
स्फूर्नवक्षसि काशधामन् ! शूलटङ्कित पूर्तकर्मन् !
छत्रप्रसरे वीरकाव्ये धरणिक्षोभे मन्त्रकारिन् !
एहि नयने एहि हृदये ! एहि रक्ते यन्त्रकारिन् ॥४॥

शून्यनाम्ना रिक्त नाम्ना
नीलपविगल ! नीलपविगल ?
कल्पपादपरूपसरणे
एहि ! रक्षक शाश्वतसुफल ! ॥५॥

●

## इतिहासरथे भूगोलपथे

[ रागधनाश्री : ]

अणुबमविपिने कोऽयं भ्रान्तः ? ॥१॥

इतिहासरथे भूगोलपथे कोऽयं शास्त्रैः श्रान्तः ? ॥२॥

युद्धैः क्षारः सङ्गरलिप्सुः कोऽयं भजते शस्त्रम् ? ॥३॥

केयं रजनी केयं ध्वान्तं दिवसे द्युतिनिर्वस्त्रम् ? ॥४॥

काञ्चनराजतमत्ते प्रघणे केयं वह्नेः क्रीडा ? ॥५॥

जठराह्वाने विषनिर्मोके दाहकहुङ्कृतिमीडा ॥६॥

जागृहि शोषण ! जागृहि स्वार्थं च ! नश्यति हीरकस्वर्गः ॥७॥

झञ्झाहाहाकारे क्षोभे विमृशत्यार्थिकवर्गः ॥८॥

बालानां महिलानां बहुशः क्रुद्धो रोदनविन्दुः ॥९॥

तत्परिवेशे वीचीखड्गः प्रलये गर्जति सिन्धुः ॥१०

कठिनपरीक्षणविस्फोटैः का त्वाशा देशे देशे ॥११॥

किं गणितं किं सुफलानयनं दाहोल्वण उन्मेषे ॥१२॥

अणुबमराशे ! गुप्तोऽद्य च कः ते हृदि दनुजः शान्तः ॥१३॥

त्रासे ग्रन्थौ ग्रन्थे ग्रन्थे सकलविमर्शः क्षान्तः ॥१४॥

अणुबमविपिने कोऽयं भ्रान्तः ।

## विपुलबोधः

वयं सूर्यरोषा वयं तूर्यघोषाः
वयं तुङ्गशैला वयं तुङ्गकायाः
वयं वज्रसृष्टा वयं लौहपृक्ताः
वयं रुद्ररक्ताः वयं कालप्रायाः ॥१॥

वयं क्रान्तिदूताः वयं क्रान्तिबीजाः
वयं लोलजिह्वाः सदा वह्निवर्षाः
वयं भीमनेत्रा वयं भीमकर्णाः
वयं चक्रवाताः वयं सिंहहर्षाः ॥२॥

वयं भुक्तिमार्गा वयं मुक्तिबोधा
वयं सत्यशोभा वयं न्यायहेतुः
वयं हिंस्रदेवा वयं शूरसेवाः
वयं युद्धसिन्धुः वयं खड्गसेतुः ॥३॥

वयं नूत्नज्योतिः वयं प्रत्नव्योम
वयं सर्वराजाः वयं सर्वभृत्याः,
वयं ध्वान्तकर्षा वयं भीतिमोक्षाः
वयं कार्तिकेयाः वयं सर्वकृत्याः ॥४॥

वयं मानवाः किं वयं मानवाः किम् ?
वयं शान्तिपूजा वयं शान्तिशंसाः,
वयं व्यष्टिशान्तिर्वयं वृन्दवृन्तम्,
वयं मानवाः भू-वने स्नेहवंशाः ॥५॥



## हरहरायते संग्राम–संभारः

प्रकटति गाण्डीवं दिने दिने
अर्जुन ! अर्जुन ! इति घने घने
आह्वयति बले बारं बारम्,
हृष्यति वर्णें भुंवि कणे कणे ॥१॥

स्फुरिते द्रविते साहससेके
बुद्ध्यति पवनो बुद्ध्यति क्षोणी
खड्गं धरति च मौनं शून्यम्,
गर्जति शैलो गर्जति द्रोणी ॥२॥

युद्ध्यति गगनं युद्ध्यति झञ्झा,
बहु हुङ्करुते क्लिन्नो देशः,
रवि- टङ्कारे नृत्यति कालः,
धावति रुद्रः शोणितवेशः ॥३॥

कोणे कोणे कुरुताभ्रान्ता,
काशे काशे पाराडवविशिखाः,
सङ्कुलतासंग्राम-सहस्रे
पथि पथि कौटिल्याः मुक्तशिखाः ॥४॥

गुप्तः क्षिपति विधुः प्रालेयम्
उडुगणशान्तिर्वयति च जालान्
उल्वणसरितासागरवीचिः
मुञ्चति तीरे तीरे व्यालान् ॥५॥

अपसर जडते ! अपसर मृत्यो !
जीवन ! कूर्द ! च वात्याचक्रे
एकार्जुनर्विजितं तद्युद्धम्,
इह बहु पार्थाः जीर्णे शक्रे ॥६॥

●

## क्रान्तदर्शिता

अजिरे भुकम्पो द्वारे भूकम्पः,
आकाशो मेघो बहुशः कम्पेते,
अनुवारं शैलः शिखरं कम्पेते,
सरिह्लद् सागरगाम्भीर्यं कम्पेते ॥१॥

वर्णे वर्णे खलु विस्फूर्जंप्थुस्फोटः,
शब्दे शब्दे मार्तण्डजटा झञ्झा,
प्रतिवाक्यं च भुशुण्डिशतघ्नीवृन्दम्,
अर्थे चार्थे रुद्राणी प्रत्यञ्चा ॥२॥

इतिहासो भीतो भीतो ननु गुप्तः,
रणभूमिं त्यक्त्वा यातो भूगोलः,
शास्त्रमुपरतं, जीवति तीक्ष्णं शस्त्रम्,
घूर्णति भूमौ हिंस्रः सिंहोलोलः ॥३॥

बहुहिमपाते पाषाणानां कोपे,
रे कः शेते कक्षे मदिराभोगे,
अन्याय वने शेते शिरसि तरूणाम्,
अद्यत्वे नहि चेतति जडतायोगे ॥४॥

असिधारायां प्रचलति बुद्धो न्यायः,
अहं विहसति सूर्ये ज्वालामाली,
नहि शिशुरेष च, तरुणस्तरुणः शक्तः,
एष हनिष्यति दनुजान् बहुबलशाली ॥५॥

## श्रीहर्षो लिङ्कनः टालस्टायो वा

गुप्तस्तुं समुदः खल्वेषः,
अब्राहमलिङ्कन एष नु वा,
टालस्टायः खल्वेष च रे
कविरेष तु सैनिक एष नु वा ॥१॥

"युद्धं कुरु" वदति न श्रीहर्षः,
रचयति कवितां परमोदात्ताम्,
गङ्गायमुनासङ्गमहृदये
दत्ते नहि खड्गं, किमु सत्ताम् ॥२॥

वहति कृपाणं च भुशुण्ड्यग्निम्,
वल उद्दामे वामे हस्ते,
कलत्रंचोत्वणबहुमसिज्योतिः
स्फुरिते बाहौ दक्षिणप्रस्थे ॥३॥

तस्य तु सार्थी गगने सूर्यः
वसुधायां खलु विश्वं मित्रम्,
सरितासागरभीमविवर्ते
घर्मं च ज्योत्स्नाःनित्यवहित्रम् ॥४॥

जातिर्वर्णो रङ्गविभेदः
पुरुषो महिला खल्विति गणना,
शिविरे शिविरे मिथ्याधर्मः
यस्य च शत्रोः सेना-वलना ॥५॥

दुःखे दारिद्ये पृथुकलहे
ओषधिरेतद् यस्य च गीतम्,
पथि पथि दैनन्दिनसंघर्षे
तद्धुङ्कारः धनुरुपनीतम् ॥६॥

यस्य किरीटे व्याकुलशम्पा
कुरुते जगतो नवमभिषेकम्,
प्रावृषि सलिलं, ज्येष्ठे वह्निः
रचयत ऊर्मिलस्फुरणावेशम् ॥७॥

षड्रिपुयुद्धे शब्दे कुशलः
कविरेषतु सैनिक एष नु वा,
इतिहासो नहि, शाश्वतसत्यम्
रणभूमौ हृदये एष नु वा ॥८॥

## मन्त्रे ग्रन्थे रणरोमन्थे

शब्दाः ! भवत पिनाकी रुद्रः
उच्छृङ्खलदिवि मत्तधरायाम्,
कुरुत ! कुरुत ! पदताण्डवनृत्यम्
मर्दत ! स्पर्धां शस्त्रविभायाम् ॥१॥

क्षिपत ! क्षिपत ! खलु दिनकरज्वालाम्,
बहुशो बलमार्तण्डविताने,
जाग्रतु चन्द्रो ज्योत्स्ना ताराः,
पथि पथि स्फुरितालोकप्रणामे ॥२॥

अर्थाः ! विधरत ! नवतारुण्यम्,
विष्णोश्चक्रं वज्रं शङ्खम्,
अवतरत च विस्फूर्जथुनयने,
रचयत रक्षकदिग्गजवंशम् ॥३॥

प्रसरत ! मेघे शम्पाकुटिले,
व्याकुलविपिने सिन्धोर्मनि,
आन्दोलितहृदये मस्तिष्के,
नवनवलक्ष्म्या उल्वणत्राणे ॥४॥

नवगीत ! रणित ! धात्र्यनुबन्धे,
गुञ्जच कुरु पुलकं हिमशिखरे,
उन्मीलय त्र्यम्बकवह्निदृगम्,
कज्जलकल्मषकिल्विषनिकरे ॥५॥

रागाः ! प्रसरत ! प्रसरत ! विपुलम्
अवयवप्रश्ने भूत्वा रक्तम्,
जनयत ! जनयत ! चण्डप्रभातम्,
भूत्वा मरुताप्लवनं शक्तम् ।।६।।

शब्दाः ! यूयं ब्रह्मा विष्णुः
शब्दाः ! यूयं शाश्वतरुद्राः,
मन्त्रे ग्रन्थे रणरोमन्थे,
मञ्चे जागृत ज्योतिर्मुद्राः ।।७।।

## अङ्गारो गर्जतिहिमालये

अङ्गारो गर्जति निगिलति सरिताम्,
अङ्गरः कुरुते रौद्रविलासम्,
अङ्गरः प्रवमति त्वरयति झञ्झाम्,
चण्डः कुरुते दाहकपरिहासम् ॥१॥

वात्याचक्राणां बहुकलमैः
उल्वण-ज्वालाभृकुटिनिपातैः
दत्ते वाडवविनिसृतगालिम्,
प्रक्रमति कठिनत्रिशूलापातैः ॥२॥

धावति नभसो दग्धं हृदयम्,
मस्तिष्कं घूर्णति वसुधायाः,
विटपे विटपे कविताकाथे
रोदिति सत्ता मृगतृष्णायाः ॥३॥

परमज्वराकुलबालच्छाया
उच्छ्वसिता भूलुण्ठितयाने
पुष्पे पुष्पे फेनकवक्त्रा
निः संज्ञा पत्रावलित्राणे ॥४॥

दिनकरखड्गैश्छिन्ना भिन्ना
जीवनसीमाहीनप्रतिज्ञा ।
उग्रं पठति च "ह्रीं क्लीं फट् फट्"
नीडे विहगैर्विकलाभिज्ञा ॥५॥

अयि ! "धूधू" ज्वलति च पवनचिता,
घर्मार्त्ताः शोणितसंघर्षाः,
कुर्वन्ति च पथि ताण्डवनृत्यम्,
संनादित-ढक्कासंकर्षाः ॥६॥

वह्नेः सार्थे छत्रविहीनः
रुद्रगणा इव चातपराजः,
प्रचलति, द्रवति च हिमगिरिमौनम्,
गगनप्लावितशैलसमाजः ॥७॥

## अभिषेकः केषाम्

कालाद् वृद्धोजातो रुद्रः,
तस्य तु मीलितलोचनत्रितयम्,
शान्तो दानवध्वंसनक्रोधः,
पश्यामो नहि ताण्डवप्रणयम् ॥१॥

शृणु शृणु शैले शिखरेशिखरे
चेष्टाप्रगतिविलोडितपवन !
तिमिरे तिमिरे काशे कुर्मः
अभिषेकं रुद्रं तव धवन ! ॥१२॥

वुद्ध्य च शक्तिघने मृत्सत्त !
त्वमसि तु सर्वेषामाधारः,
त्वमसि तु जीवितजडतायामः,
अभिषेको रुद्रस्तव सारः ॥३॥

अट्टं हस हस ! आयि ! जलव्यूह !
आवर्तविवर्ते त्वं हि त्रिशूली,
बद्धे स्थाणौ शृणु तव कुर्मः
अभिषेकं रुद्रं रसचूलि ॥४॥

ऊर्ध्वं ऊर्ध्वं नहि स्याः खलु त्वम्
उड्डीनः विपुलः अयि आकाश !
एहि च वसुधां, कुर्मो रुद्रम्
अभिषेकं ते यौवनहास ! ॥५॥

संप्रति ते रे वास्तवप्रबला:
बह्व्य: भीमाषेक्षा: पावक !
चालय दुर्गा: जिह्वा:, कुर्म:
अभिषेकं रुद्रं ते ध्वरमख ! ।।६।।

अभिषेकं रुद्रं कुर्मो रे
गेहे गेहे ननु शास्त्राणाम्,
हिमकैलासे लीने रुद्रे
शतकल्मषशोधनशस्त्राणाम् ।।७।।

## व्यङ्ग्यविपणी

उपवन ! कस्ते तूहापोहः ?
का ते सीमा कश्चायामः
का ते शङ्का, को विश्वासः ?
किं ते लक्ष्यं कः संयानः ? ॥१॥

पुष्पाणां या सुषमाभाषा,
साभिहिता सौरभप्रत्याशा,
कण्टकहृदि वाग्व्विरहितमौने
नद्धाः कान्तिः तीक्ष्णाविकाशाः ॥२॥

पादपशिखरे लतिकानिकरे
पददलिते दूर्वासंकेते
विहगमधुरसंभाषणगीते
स्फुरति तु किं खलु पवनप्रकेते ।।३॥

सरसः प्रश्नाविलवीचिवशे
वक्ति च किं नृत्यत् सुखबिम्बम् ?
यूथीतर्के चाम्रवितर्के
मृग्यति कः स्फोटो मतिबिम्बम् ॥४॥

मादकरसमयमानवभ्रमणे
भ्रमति तु भृङ्गो मन्त्रसमूहः,
कुरुते नवनवव्यञ्जनसरणिम्ः
नानाकलिकुलसंज्ञाव्यूहः ॥५॥

उपवन ! के ते तूहापोहः ?
अवरोहो भावन आरोहः ?
ऋतुविपणौ पथविप्रतिपत्तौ
किं ते वैराग्यं किं ते मोहः ? ॥६॥

## नहि आलोकः ! नहि छाया !
## व्याप्ते ! व्यापृते ! का त्वम् ?

अनुशासनहीने वद ! का त्वम्
कस्ते चाद्भुतप्रकृतिनिवेशः ?
उच्छृङ्खलते त्वं वाचाला
गर्वारूढा खल्विति शेषः ॥१॥

नयसि च बहुशो मानव यूथान्
खाते शतमरुतोत्पथदेशे
पङ्किलपिच्छिलस्वप्निलविपिने
मारकविजने जडतोन्मेषे ॥२॥

चेत ! अरी त्वं नयनविहीने
तर्कंरणे क्वचिदपि कुरु मैवम्
यमनियमसमाहितजगतीयम्
सिद्धान्तयुतं सकलं जैवम् ॥३॥

पश्य च ! प्रचलति भीतेर्वातः
असिहस्तो रे सलिलोच्छ्वासः !
धावति धृत्वा पाणौ ज्वालाः
नक्तदिवं शूरस्त्वाकाशः ॥४॥

जीवितसंथाने क्षणकणता
भूकम्पे दुर्मदझञ्झायाम्,
गर्जति वर्षति कर्षति गणितम्
वर्जत्यालोके छायायाम् ॥५॥

अद्य तु बुद्ध्य च ! उच्छृङ्खलते !
वसुधाहिमगिरिसागरहृदये
चिरसत्यानि तु नैतिकतायाः
त्रस्यन्ति च गतिचेष्टाविनये ॥६॥

●

## अलं विस्तरेण

ऊर्ध्वं विकसति भीतेः स्वप्नः,
याञ्चा निम्नं नृत्यति सरणौ,
हृदयं चोड्डीनं मधुचन्द्रे
अद्य निमज्जति सैकततरणौ ॥१॥

विश्रम्भमुकुलविकलप्रतीक्षा
वाष्पितलुण्ठितगीते क्षीणा,
झञ्झाकुलसौरभदलविनये
तिष्ठति शतशः झङ्कृतवीणा ॥२॥

शाखास्यूतं चेच्छाकुमसुम्
चुम्बननीडं रचयति ज्वालाः,
किरणानां निजनिजसंघर्षः
प्रश्नभये धत्ते पणमालाः ॥३॥

शास्त्रं लीनं चाद्भुतद्यूते
शस्त्रं नहि परिचिनुते गणितम्,
बहुरेखाङ्कितविटपस्वभावे
गुञ्जति वातुलशङ्काभणितम् ॥४॥

प्रतिफलति न मसितिमिराह्वानम्
नहि विपणति वनमालोकपथः,
नहि खलु प्रचलति प्रीतेः पवनः,
निगडितकुञ्जे पदखञ्जश्लथः ॥५॥

दिवसो विमृशति किं वरणीयम् ?
रजनी पृच्छति किं करणीयम् । ?
ऊषा चेतति किं शरणीयम् ?
सन्ध्या प्रथयति किं कलनीयम् ? ॥६॥

●

## एष हृदयकषायः

विजने वसतौ काणो धर्मः काणी ज्योत्स्ना,
लुञ्जा सुरभिः म्लानं कुसुमं, शववच्छाया,
जिह्मे खाते, शिखरे निर्गडितसैकतभाषा,
प्रांशुनिदाने पांसुलप्रणतौ मूर्च्छितप्राया ॥ १ ॥

भर्त्सितभवने तिमिराकुलपवने व्रणसदने
गोपुरश्लेषे कोऽयं कोऽयं नयनवियुक्तः ?
शोणितशाणे तित्तिलत्राणे खगखण्डितरवे
तूलीतिक्तः शूलीसिक्तः कर्णवियुक्तः ॥२॥

दूषितदेशः क्लेशितकालो वेलावेशः
प्रचलति, प्रभवति, प्रलपति, लुण्ठति वमति ।
कूर्दति, धर्षति, कर्षति दिवसं, रजनीं, सन्धी
तीरे, तारे, पारे व्रणितं नीलं गदति ॥३॥

जागरणे खलु स्वप्ने परिचित एष तु सार्थी,
आह्वाने मूकः, शतमौनविभावे मुखरः,
अभिधाने त्वभिधाने नन्वविधानविहीनः,
एष हि हृदयकषायो निर्वेदं विकिरः ॥४॥

●

## इत्यलं नहि

व्रणिता रजनी ज्वलितो दिवसः,
व्यथिता विकला सकला पथता,
मथिता कलिका, गलितं कुसुमम्,
भ्रमिता भ्रमरी, सुरभेरंथता ॥१॥

रविता कुरुते मिहिकारचनम्,
विधुता वृणुते तिमिरास्फुरणम्,
कविता दधते कुण्ठितश्लथताम्,
बहु सीदति रे निमिषावरणम् ॥२॥

क्वणिता कटुता, रणिता रणता,
स्खलिता मुरली विधुरा खता,
चलितं गगनं छलिता वसुधा,
कलनां नहि पश्यति रे शवता ॥३॥

गणने पदता तनुते पणताम्
नहि गार्यति रे मनसा मधुता,
अति चञ्चति रे कुटिला सरिता,
वितथा कणिकाक्षणिका-पृथुता ॥४॥



## क्षिप्त्वा पर्युषितं सन्धिम्

नीलिमरोमन्थे नित्यं प्रचरति व्रणता,
शोणितप्रश्नसमाहारे विहसति मसिता,
रागोच्चाटनखण्डविखण्डे नग्ननिकरे
वननिर्मोके श्यामा व्याली प्रथिता ॥१॥

ज्योत्स्नारेफान् पिबति तुकज्जलपदरचना,
कुसुमप्रकरणे मस्तिष्के सौरभगीतम्,
उन्मेषविरावे द्वन्द्वनिमीलितवेशः,
सैकतवीचिविहागे किं मिहिकानीतम् ? ॥२॥

गर्जति शून्यं, लुण्ठतितर्कः कलिकलनाम् ।
एकलवात् रचयति सुरसरितां पाषाणः,
उदयति तारकसंभारे रसव्यपदेशः
वादयते चीत्कारं रे निमिषविषाणः ॥३॥

कथमपि नहि शेते कण्टकनयननिदानम्,
तनुते स्कान्धावारं बहु वृणुते ग्रन्थिम्,
उच्चावचरवेदे मिथ्यारेखाङ्कपुटे
चन्द्रविकल्पे क्षिप्त्वा पर्युषितंसन्धिम् ॥४॥

●

## पृच्छां यावत्

सिन्धोर्निम्बतरुर्नह्याज्ञा
कीर्णा मार्गा नह्यनुभूतिः
वातावरणं नहि रसयाञ्ञा
छायासुरभिर्नहि सुमपूर्तिः ॥१॥

ऊर्मियवनिका नट्यति तर्षम्,
शून्यानां घर्मार्ते वचने
बनबिम्बविकलमुखरितमुकुरे
घुवति च गीतं कण्टकरचने ॥२॥

मनसश्चापः स्फुरति तु सलिले
शङ्काशिविरः क्षिपति तु वाणान्,
गतिगिरिशिखरे क्लान्तेर्मुकुटः
धरति तु काञ्चनकीरान् काणान् ॥३॥

संगणकः पृच्छति व्याख्यानम्
लुण्ठति विभिन्नं वृन्तावेशः,
उत्तरति तु वटरुह् प्रश्नविधा,
पिबति च मृगभ्रममधुतां मेघः ॥४॥

## पाषाणचिन्ता

चाति विजनव्रणिते वातुलवीप्सा,
बिम्बति बुद्बुदबद्धविशृङ्खलता,
हरिते हुतभुग्दन्तुररोमन्थे
जटिलविरामान् धुवति तु पांसुलता ॥१॥

चर्वितचर्वणदिनपर्के लासे
पल्लवप्रेषितपृथुहाहाकारे
उड्डीना केयं पिज्जर प्रतिमा
पविपटले ज्वालामुख उद्गारे ॥२॥

विषवातायनविजटितनिर्वेदः
एष तु पलपरिमलप्रश्नप्रणामः,
किरणे किरणे किरति तु कज्जलताम्
द्राक्षाट्टप्सो नितरां क्षुत्क्षामः ॥३॥

हृदि हृदि रे नयनानां पैशुन्यम्
आह्वयति च खलु दर्पणसंग्रामम्,
शम्पासंशयसरससमारोहे
गीतिर्गच्छति स्तोकं पन्थानम् ॥४॥

पाषाणानां चिन्ता विधुविहिता
कक्षे कक्षे रसराजसशूलम्
वितरति संज्ञाप्लवने रवप्रवणे
भ्रमराणां गणितं गुञ्जनमूलम् ॥५॥

शब्दः शब्दो नवकलिका कुसुमम्,
मुरली मुरली राका सञ्जाता,
क्षोभः क्षोभो वानीरनिकुञ्जम्
इत्थं चक्रे प्राघूर्णितगाथा ॥६॥



## जनताजनार्दनसन्दर्भे

[ रागधनाश्रीः ]

भूयात् सर्वं शुभदं शुभदम् ॥१॥
अजिरे द्वारे निकटे दूरे भूयात् सर्वं शुभदं शुभदम् ॥२॥
हृदये वचने कर्मणि भुविदिवि भूयात् सर्वं शुभदं शुभदम् ॥३॥
नमनं शुभदं चाशीः शुभदमं, भूयात सर्वं शुभदं शुभदम् ॥४॥
क्षणिकाक्षमनं कणिकाक्वणनम्, भूयात् सर्वं शुभदं शुभदम् ॥५॥
भाषाभणितं गीतेर्गणितम् भूयात् सर्वं शुभदं शुभदम् ॥६॥
दिनकरद्रवणं हिमकरहसनम् भूयात् सर्वं शुभदं शुभदम् ॥७॥
ज्योतिःशुभदं तिमिरं शुभदम्, भूयात् सर्वं शुभदं शुभदम् ॥८॥
प्रातः पवनः सन्ध्यासरणम्, भूयात् सर्वं शुभदं शुभदम् ॥९॥
मसृणं मौनं रथितं रवणम्, भूयात् सर्वं शुभदं शुभदम् ॥१०॥
प्रीतिप्रकरणं नीतिनिमित्तम्, भूयात् सर्वं शुभदं शुभदम् ॥११॥
संज्ञास्रवितं जडताजटितम्, भूयान् सर्वं शुभदं शुभदम् ॥१२॥
चिरसंकलितं चिरमवकलितम्, भूयात् सर्वं शुभदं शुभदम् ॥१३॥
गुण्ये गुणितं भाज्ये भक्तम्, भूयात् सर्वं शुभदं शुभदम् ॥१४॥
तन्मात्रत्वरणाकुलतुलितम्, भूयात् सर्वं शुभदं शुभदम् ॥१५॥
जागर्तिजवं कलरवकलितम्, भूयात् सर्वं शुभदं शुभदम् ॥१६॥
स्वप्ने सृष्टं शयने शमितम्, भूयात् सर्वं शुभदं शुभदम् ॥१७॥

●

## मिलति न मुरली

[ रागधनाश्रीः ]

मन आक्रीडे मिलति न मुरली ॥१॥
उदयति युद्धं शोणितविपिने, शंसति शङ्का शबली ॥२॥
तिमिरपिधाने सर्पबिले खलु शेते चूलाकुलता ॥३॥
ज्योत्स्नातर्के विदलितवाते प्रसरति नयनाविलता ॥४॥
छायानां शूलीपार्थक्यं कलयति गन्धाविलता ॥५॥
गणयति गगने गुप्तं गणितं पृथुलापणपङ्क्तिलता ॥६॥
"हयः" सरति तु सरिद्रवितेस्वप्ने चोर्मीनां सङ्गणके ॥७॥
"श्वः" खलु पृच्छति पुरसंकेतं मार्गे शतरथरणके ॥८॥
पत्रे पत्रे पविपाथेयं मूका सुमसंबलता ॥९॥
वात्याचक्रं युद्धयत इहरे व्यक्ते वंलवञ्जुलता ॥१०॥
पञ्चाक्षरमन्त्रं बहु पठति च शतमुखभूतविकारः ॥११॥
नश्यति घस्मरघनघुणधर्मे पलपुस्तकपरिवारः ॥१२॥
रोषः कुशली त्रासः कुशली कथमथ भवने खुरली ? ॥१३॥
मन आक्रीडे मिलति न मुरली ॥१॥

●

## दीप्तोच्छलतायाम्

[ रागधनाश्रीः ]

कर्मणि जीवितजुष्टा जडता ॥१॥
बीजकवीप्सां कुसुमकलायां स्फुरयति रूपक-जवता ॥२॥
दिवसः स्वप्निलश्यामाशिविरे काचिच्चपला-भिक्षा ॥३॥
शुकपिकगाने यं परिरक्षति कोटरनीडतितिक्षा ॥४॥
विपुले मृन्मयहाहाकारे विकसति जयजयकारः ॥५॥
शतदलशीर्षकपादपप्रथिते प्रीतः प्राणाचारः ॥६॥
सौरभत्रेपथुवरणवहित्रे कर्षति कुसुमं सिन्धुम् ॥७॥
दृगस्वरव्यञ्जनचित्राधारे भजते वाष्पजविन्दुम् ॥८॥
कोलाहलधमनीशतनिकरे रक्तमयी जिज्ञासा ॥९॥
शाद्वलस्यन्दनशीलाशप्ता स्थाणुवती प्रत्याशा ॥१०॥
परिभवप्रश्ने जयजागरणे धावति दीप्तोच्छलता ॥११॥
विलिखति चित्रं काव्यं ग्रावणि रहसि तु शतशतफलता ॥१२॥
कर्मणि जीवितजुष्टा जडता ।

## त्रिकालत्रपा

[ रागधनाश्रीः ]

नहि रे तित्तिलपक्षच्छाया ॥१॥

प्राप्ता जाङ्गलदेशे विजने वाष्प ! कथं ते काया ? ॥२॥

उद्विग्नं सरितायां प्रचरसि कुत्र च नौकाध्वंसे ॥३॥

मृग्यसि राकां, तारां ज्योत्स्नां खिन्नं काञ्चनदंशे ॥४॥

अनुवदति च वसुधा ते हृदयं सिन्धोः खरकरवाले ॥५॥

क्षितिजं बहुशः खण्डं खण्डं चारोहति तव भाले ॥६॥

आलोककणः खलु क्षुत्क्षामो रोदित्यजिरे द्वारे ॥७॥

सार्थानां व्यपदेशे विपणति स्मितमुकुलान् व्यापारे ॥८॥

नग्नो ग्रावा क्षीयत दूहरे शम्पानिगडित चूले ॥९॥

प्रवहति पथि जीर्णः संप्लावे नितरां विदलितमूले ॥१०॥

भोजनगृहवस्त्राभावे का विश्व ? इयं ते माया ? ॥११॥

नहि रे तित्तिलपक्षच्छाया ॥१॥

## दुःखी प्रणवः

[ रागधनाश्री ]

क्षुधितः "सोऽहं" नग्नं "तत्वम्" ॥१॥
निर्वासित "मेकोऽहं बहु स्याम्" रे क्षार ! उदारत्वम् ॥२॥
गर्जति धावति वात्याचक्रे ननु निर्लज्जनिजत्वम् ॥३॥
"वसुधैव कुटुम्बकमेकं" दिवि मृत्योर्भवने कीर्णम् ॥४॥
निशिह्वापङ्क्तौ दिवसे स्फोटे मातुर्हृदयं शीर्णम् ॥५॥
नन्दनविपिने रोदिति स्रष्टा, नितरां क्षुब्धो विष्णुः ॥६॥
प्रातः सन्धौ ज्वाला कुरुते कुपितो रुद्रो जिष्णुः ॥७॥
अद्य भविष्यत् धूमे धूमे कुरुते हाहाकारम् ॥८॥
शोणितदृङ्मन्त्रो हुङ्कुरुते तनुते विषचीत्कारम् ॥९॥
वर्गाणां धर्माणां व्यूहे मानवता धर्मार्त्ता ॥१०॥
मरुव्याख्याने चरुसंख्याने मृतप्राया तर्षार्ता ॥११॥
संप्रति नहि निवहिष्यति सा शीर्षे ग्रेनितशैलम् ॥१२॥
अद्य दहिष्यति महाश्मशाने तिमिरैरूतं चैलम् ॥१३॥
रिक्तैरुन्नतिगीतैः स्तोत्रैः ग्रन्थे गुप्तं सत्वम् ॥१४॥
क्षुधितः "सोऽहं", नग्नं "तत्वम्" ॥१॥

## कोलाहलकपिश

[ रागधनाश्री ]

कोलाहलकपिशा यान्त्रिकता ? ।।१।।
कण्टकिता पृच्छत्यनुवारं "का नव सामाजिकता" ? ।।२।।
कुत्रगतारे व्यालीदष्टा निर्वासितमानवता ? ।।३।।
रौति तु मूले रौति तु चूले प्रकृतेः पदप्राञ्जलता ।।४।।
आननदेशे मस्तकलेखे विहसति रे पांसुलता ।।५।।
संघर्षे कलहे भुवि सर्पति नारक-सन्तानकता ।।६।।
क्वगता सामञ्जस्य-शिवस्य च गौरी रूपात्मकता ? ।।७।।
गेहे गेहे चिन्ना रजनी हृदये कालाविलता ? ।।८।।
नष्टे क्षितिजे स्वस्तिककविता प्रसरित धूमाकुलता ।।९।।
संस्कृतिविपिने संस्कृतशैलो मूर्च्छति, पथसम्बलता ।।१०।।
शस्त्रे शीर्णं शास्त्रं, विरटति कटुशङ्काक्ष शबलता ।।११।।
क्षुधिता, तृषिता, विधुरा, नग्ना किं विमृशति निर्बलता ।।१२।।
औयोगिकक्रान्तिं पथभ्रान्तिं ननु वयति च प्रान्तिकता ।।१३।।
कोलाहलकपिशा यान्त्रिकता ।

## का श्वः कुञ्जकथा ?

[ रागधनाश्रीः ]

आत्मनि केद्रित एष विकासः ।।१।।
दीपं दहति तु संप्रति स्वार्थे दिशि दिशि भ्रान्तविलासः ।।२।।
सागर-हृदये वेलाविकलो वलितः शफरीन्यायः ।।३।।
कान्तारे तर्केणानेन हि प्रसरति तरुसमवायः ।।४।।
प्रत्यूषो निगिलति मधुज्योत्स्नां सन्ध्या मधुकरदिवसम् ।।५।।
कोलाहलकङ्कालो नगरे गीतेः रूपं रभसम् ।।६।।
पत्तनपाण्डुरप्रणतौ पिहिता हा ! माता मानवता ।।७।।
बह्वभिशप्ता यन्त्रे मन्त्रे तन्त्रे चेष्टाजवता ।।८।।
वसतेः सङ्कुलतायां कलिसुमविनयैरटवीरुदनम् ।।९।।
प्राङ्गण प्राङ्गणप्रतिपैशुन्ये शीर्णं शान्तेः सदनम् ।।१०।।
शिविरे शिविरे निजता कुरुते पथि भीषणहिमपातम् ।।११।।
बीजगणित एषाहमहमिका हन्ति च घनफलघातम् ।।१२।।
जगतः का प्रगतिः का सुगतिः ? गर्वरवेरुपहासः ।।१३।।
आत्मनि केन्द्रित एष विकासः ।

# विशिष्टसमालोचनोद्धरणानि

१—प्राचीनपरम्पराप्राप्तमहाकवीनां कालिदासभासभारविमाघश्रीहर्ष-प्रभृतिमेधामहनीयानां राजमार्गेऽगत्वापि विदुषानेन स्वकीयं महाकवित्वं सम्यक् स्थापितम्। अयं महाकविः साहित्यसाधनायां व्यापृतः आर्थिक-युगेऽपि ऋषिवत् जीवनं यापयति। ......महाकवेः प्रतिभा महाकाव्यत्वं विस्मयसंवलितया शैल्या स्वयमेव स्थापयति।

—महाकविमायाप्रसादत्रिपाठिविशेषाङ्कः,
सूर्योदयः (वाराणसी) अप्रैल, १९८३

२—अन्ताराष्ट्रियख्यातिप्राप्ताय महाकविमायाप्रसादत्रिपाठिमहाभागाय "इमिरिटसफेलोशिप" (१९८७ ई०) इत्याख्या विशिष्टसंमानवृत्तिः भारतसर्वकारेण प्रदत्ता। १९८१-८२ तमे खीष्टाब्दे अयं सुधीः परिनिष्ठित-कविः राष्ट्रयतिसंमानमपि (संस्कृत काव्याय) लब्धवान्।"

पारिजातम्—कानपुर,

आश्विनकार्तिकौ, २०४४ वि०

३—संस्कृत कविताके क्षेत्रमें अपने अनुपम और अमर अवदान द्वारा महाकविमायाप्रसादत्रिपाठीने आधुनिक संस्कृत कविताको अन्त-र्राष्ट्रीय मंचपर स्थापित करनेमें योगदान दिया। उनकी अप्रतिम संस्कृत काव्योपलब्धिके लिए राष्ट्रपतिसंमान भी प्राप्त हो चुका है।

स्वतंत्र भारत (काशी, लखनऊ) १-७-८७

४—संस्कृत कविताके क्षेत्रमें अपने अनुपम अवदान द्वारा महाकवि त्रिपाठीने आधुनिक संस्कृतकविताको अन्तर्राराष्ट्रीय मंच पर स्थापित किया है। देश-विदेशके सभी विशेषज्ञोंने कहा है कि इनको संस्कृत कविताएँ यूरोप-अमेरिका की सर्वेत्कृष्ट कविताओंसे सफल टक्कर लेती हैं।

लोकस्वर—(मध्यप्रदेश)—१३-८-८७

6—Mahakavi Acharya Maya Prasad Tripathi, a renowned sanskrit poet. specially honoured by the Govt of India, for his outstanding contribution for the cause of Sanskrit Poetry. specially lyrics—The Pioneer. 2-7-87

7—Mahakavi Acharya Maya Prasad Tripathi has made unigue contribution to Sanskrit Poetry. The compositions of Mahakavi Tripathi are strikingly original and embrace various aspects of thoughts in the Universe, World Peace, and Unity of mankind,.......He has given new dircetions and dimensions to Sanskrit Poetry that would place him among the leading poets of the Contemporary world.

N. S. S. Raman

Professer & Head, Deptt of Philosophy,

Banaras Hindu University

८—महाकवि आचार्यमायाप्रसादत्रिपाठीने संस्कृतकविताको बिलकुल नई दिशा एवं नये आयाम प्रदान किए हैं।...... त्रिपाठीजी की इन कविताओंकी शालीनता, सौन्दर्य, गरिमा, आधुनिक भावबोध, अद्भुत उद्भावनाएँ, निःसीमक्षितिज, व्यापकता, प्राणवत्ता तथा वास्तुविधान अनुपम ही नहीं अमर भी हैं।

करुणापति त्रिपाठी,

अध्यक्ष, उ० प्र० संस्कृत अकादमी, लखनऊ,

भूतपूर्व कुलपति, संपूर्णानन्द संस्कृत विश्वविद्यालय,

वाराणसी

**Northern India Patrika**

## Sanskrit Poet

**26-6-87**

## Honoured

**9–Mahakavi Acharya Maya Prasad Tripathi has been awarded Emeritus Fellowship this year by the Government. Through his immortal Sanskrit poetry mahakavi Tripathi has established Sanskrit poetry on the International stage. Foreign and Indian experts both have said that his ultramodern Sanskrit poetry, mostly lyrics, easily competes with the modern poetry in English, Greek, German and Russian languages of the world. For being the greatest Sanskrit poet of India in 1981 82 he won President's award of Honour for Sanskrit.**

**N. I. P. 26.6.87**

**१०–आचार्य**
**पी० एन० पट्टाभिराम शास्त्री**
शास्त्ररत्नाकर, विद्यावाचस्पति
विद्यासागर, सम्मानित अध्यापक
यू० के० विश्वविद्यालय
निर्देशक : वेदमीमांसानुसन्धान केन्द्र

आवास संकेत :
४/७ हनुमान घाट, वाराणसी

दिनांक........१९८........

श्री

महाकविश्रीमायाप्रसादत्रिपाठिनमहं परिचिनोमि अयं कविता कलामायपि परिनिष्ठितो विद्वानिति प्रमाणयन् अस्य सर्वं श्रेयोऽभिलषामि ।

पट्टाभिराम शास्त्री
२५-१०-८१
पद्मभूषण

११–महाकवि मायाप्रसादत्रिपाठी के प्रायः सभी संस्कृत काव्य ग्रन्थों का मैंने बड़े मनोयोग तथा गहराई से रसास्वादन किया हैं। उनकी सर्वांगीण सुन्दरता, मनोहारिता एवं मर्मस्पर्शिता सचमुच अपूर्व है।

महाकवि त्रिपाठी का राग-रागिनियों पर अद्भुत अधिकार है। उनकी कविताएँ पूर्ण गेय होती हैं।

त्रिपाठीजी की संस्कृत कविताओं की सरलता-सर्वत्र सरल शब्दावली का प्रयोग तो बस अद्भुत है। वे अनुपमरूप से प्रसाद गुणवती होती हैं। इस प्रकार वे देववाणी के उन्नयन या जनता के भी कवि हैं।

यही कारण है कि जब त्रिपाठीजी कवि-सम्मेलनों में, या रेडियो तथा टेलीविजन पर अपनी कविताएँ सस्वर सुनाते हैं, तो श्रोता एकदम मंत्रमुग्ध हो जाते हैं।

लल्लनजी गोपाल

मोनोग्राम

सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी

१२--पत्रांक

दिनांक : ३०-६-८१

महाकवि आचार्य माया प्रसाद त्रिपाठी के परिनिष्ठित संस्कृत काव्य ग्रन्थों में आधुनिक संस्कृत कविता को एकदम नई दिशा एवं नए आयाम के साथ.साथ अनुपमता एवं अमरता भी प्रदान की है। एतदर्थं आधुनिक तमिल, तेलुगु, कन्नड़, मलयालम, मराठी, गुजराती, बंगीय आदि देव-वाणी के विद्वानों ने इन्हें महाकवि की उपाधि से विभूषित कर बहुत उचित ही किया है।

त्रिपाठी जी के संस्कृत काव्यग्रन्थों को विश्वसाहित्य में मूर्धन्य स्थान मिलना अवश्यम्भावी है। सुरसरस्वती की यह उपलब्धि सचमुच गर्व की बात है।

ह० व्रज वल्लभ द्विवेदी
आचार्य एवं अध्यक्ष, योगतन्त्र विभाग,
सम्पूर्णानन्द संस्कृत विश्वविद्यालय,
वाराणसी।
उपनिदेशक, केन्द्रीय तिब्बती
उच्च शिक्षा संस्थान, सारनाथ,
वाराणसी।

# शुद्धिपत्रम्

| पृष्ठाङ्कः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| (क) | २५ | इत्यारेव्य | इत्याख्ये वाराणसीस्थ चौखम्भाप्रकाशिते |
| (ग) | २ (स्तम्भः–२) | प्रश्नावलिता | प्रश्नाविलता |
| (घ) | १ (स्तम्भः–१) | विवेशः | प्रवेशः |
| | स्तम्भः–२ | विवेशः | प्रवेशः |
| ६ | ६ | विर्णविहीने | वर्णविहीने |
| ९ | ९ | तडिदतंसी | तडिदवतंसी |
| ११ | १ | झुद् | क्षुद् |
| १४ | १९ | वशववे | वंशवनं |
| १७ | ९ | अनिज | अनिल |
| १९ | १० | तर्कानां | तर्कांणां |
| २२ | १० | उपवव | उपवन |
| २३ | ८ | कैवर्ती | कैवर्ती |
| २६ | ४ | योद् | यद् |
| ३० | १३ | कथनाङ्कें | क्वथनाङ्के |
| ३६ | ६ | पाषाणा | पाषाण |
| ३८ | ३ | व्यङ्गथे | व्यङ्गये |
| ४१ | निम्रतः–२ | अर्वविपश्य | अर्वविपश्या |
| ४५ | ६ | सम | सुम |
| ,, | ८ | सम | सुम |
| ४९ | निम्रतः–३ | आपामानां | आयामानां |
| ५२ | १५ | रसता | रसना |
| ५३ | निम्नतः–२ | पर | परा |
| ५५ | ९ | क्षेप्तित | क्षेपित |
| ५७ | ८ | मिद्रव | भिद्रव |
| ५७ | निम्नतः–४ | धमद्र | धमद् |
| ५६ | निम्नतः–६ | ज्योतिकूलः | ज्योतिःकूलः |

| पृष्ठाङ्कः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५८ | निम्नतः–६ | ज्योष्ठस्य | ज्येष्ठस्य |
| ६६ | ८ | लामास् | मालाम् |
| ७३ | ९ | युद्धियन्त | युद्ध्यन्ति |
| ७५ | निम्नतः-६ | आश | आशा |
| ७६ | निम्नतः–५ | अर्थाचित | अर्थान्विति |
| ,, | निम्नतः–२ | एष अभावः | एषोऽभावः |
| ७८ | निम्नतः–५ | स्वर्णपरे | स्वर्णपटे |
|  | निम्नन्तः–३ | स्वणी | स्वर्णी |
| ८० | १५ | मार्गंष | मार्गणं |
| ८१ | ६ | सेकते | सैकते |
| ८६ | ८ | एकास्मिन | एकस्याम् |
| ,, | १६ | वृत्तानां | वृन्तानां |
| ,, | २५ | पूरकं | भूपम् |
| ८७ | ५ | निर्मथिम् | निर्मथितम् |
| ८७ | निमूतः–६ | वितनम् | विनतम् |
| ८८ | २ | व्योष | व्योषा |
| ८९ | ९ | विधुरम् | विधुरा |
| ९० | ५ | पुलकं विधुरम् | पुलका विधुरा |
| ९१ | ५ | प्रथमे छन्दसि | प्रापणीयं कथं |
|  |  | अन्तिमा पंक्तिः | कल्पनाकल्पितम् |
| ९२ | ३ | विपिञ्च | विपञ्चि |
| ९२ | १५ | पन्थः | मन्थः |
| ९७ | १० | कर्णं | कर्णौ |
| ९९ | अन्तिमा | शृणुरुः शृणुतः | शृणुत ! शृणुत ! |
|  |  | डक्रमणे पविते | चंक्रमणे पविते |
| १०० | ५ | वाचिका | वीचिका |
| १०१ | ५ | सान्त्वन | सान्त्वन ! (संबुद्धौ) |
| १०३ | ५ | किञ्जल्कित | किञ्जल्कित |
| १०४ | ४ | तर्कना | तर्कणा |
| १०७ | १२ | तनुसे | तनुषे |
| १०८ | १२ | वीयूष | पीयूष |
| १०९ | ३, १४ | व्याप्तति | व्यापृति |

| पृष्टाङ्कः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११३ | ११ | सूर्वान् | सूर्यान् |
| ,, | १४ | लुत्पा | लुप्ता |
| ११५ | ९ | द्युते | द्यूते |
| ११६ | ४ | विपिते | विपिने |
| ११७ | १३ | जीर्णोद्वारं | जीर्णोद्धारं |
| ,, | १५ | व्ययंदेशे | व्यपदेशे |
| ११८ | ५ | सुमरुकुलं | सुमसुकुलम् |
| ११९ | ६ | पुञ्जपतीना | पुञ्जपतीनां |
| | ८ | ऊर्मिला | ऊर्मिल |
| १२० | ८ | ग्रथर्थति | ग्रथ्नाति |
| ,, | ११ | मर्जय | मार्जय |
| ,, | १४ | कुष्ठा | कुण्ठा |
| १२१ | ११ | सङ्कुलताया | संकुलतायां |
| ,, | १५ | किं शुक | किंशुक |
| १२२ | ५ | वृत्ते | वृन्ते |
| | १५ | ज्योत्स्नलेप | ज्योत्स्नालेप |
| १२३ | १२ | आशस्तीर्ण | आशास्तीर्णं |
| ,, | १७ | द्वीपे | दीपे |
| ,, | ,, | मेधे | मेघे |
| ,, | १८ | आर्यं | अयि |
| १२५ | २ | सुख | सुर |
| १२६ | १३ | रच | वप |
| १२७ | ४ | दर्मद | दुर्मद |
| ,, | ,, | पश्चिद | पश्चिम |
| | १६ | मागदि | मार्गाद |
| १२९ | २० | प्रवनम् | पवनम् |
| ,, | २२ | लक्षशतन्धी | लक्षशतघ्नी |
| १३१ | १४ | पलमा | पलभा |
| १३६ | १० | उच्द्वसिता | उच्छ्वसिता |
| १३७ | ११ | बबूलानां | बब्बूलानां |
| १३८ | १० | शम्यां | शम्पां |

| पृष्ठाङ्कः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४१ | ४ | ह्रयायस | हृयायस |
| १४२ | ५ | भीन | भीमं |
| १४३ | ६ | मेथ | मेघ |
| ,, | ८ | प्रथण | प्रघण |
| १४६ | अन्तिमा | जोर्ण | जीर्णे |
| १४७ | ५ | ह्लद् | हृद् |
| ,, | १५ | मदिरा | छदिरा |
| ;; | १९ | अह | अट्टं |
| १४८ | १ | हर्षो | हर्षो |
| ,, | २ | समुदः | समुद्रः |
| ,, | ११ | घर्मं च | घर्मो |
| ,, | १२ | कलत्रं | कलमश्च |
| १५० | निम्नतः-२ | दृगम् | दृशम् |
| १५४ | २ | मीपापेक्षा | भीमापेक्षा |
| १५६ | १९ | संथाने | संधाने |
| १५८ | ८ | रवे | खे |
| १५९ | ८ | कुण्ठितश्लथताम् | चपलापुलकम् |
| १६३ | ६ | शुभदम | शुभदा |
| १६४ | १४ | धर्मे | घर्मे |
| १६६ | १८ | दूहरे | इह रे |
| १६७ | ७ | निशिह्वापंक्तौ | निशिदृक्पंक्तौ |
| | ९ | ज्वाला | ज्वालां |
| १६८ | २१ | वेलाविकलो | वेलाविपुलो |
| ग्रन्थारम्भमे | | महाकविरचित | ग्रन्थनाममे |
| प्रथम पंक्ति— | | कणति | क्वणति |
| द्वितीय पंक्ति— | | असरतृषा | अक्षरतृषा |